[illegible]तोमधुसूदनपादपोजयति सर्वोत्कर्षेणवर्त्तते अवापिसर्वेभ्योब्रह्मादिभ्याप्याधिकतयावर्त्तमानस्यथः [illegible] यथावनस्यत-
स्सर्वस्यमहाकेतुरिवस्थितइतितिनिरूपणात् सर्ववृक्षेभ्योधिकोभवति तद्वदिति इदमार्याच्छंदः १ एवंमंगलंकृत्वा [illegible] कथाप्र-
स्तावायसूतशौनकसंवादमवतारयति नैमिषइति अनिमिषक्षेत्रेअनिमिषः श्रीविष्णुः अलुप्तदृष्टित्वात् तस्यक्षेत्रे नैमिषारण्येऋष-
यः सहस्रसमाः संवत्सराः अनुष्ठानकालोयस्यतत्सहस्रसमंसत्रयज्ञमासत अकुर्वत किमर्थंस्वर्गायलोकायस्वर्गेगीयतइतिस्वर्गायो

नैमिषेनिमिषक्षेत्रेऋषयःशौनकादयः सत्रंस्वर्गायलोकायसहस्रसममासत २ तएकदातुमुनयःप्रातर्हुतहु-
ताग्नयः सत्कृतंसूतमासीनंपप्रच्छुरिदमादरात् ३ ऋषयऊचुः कथितोभवतासम्यक्देवमार्गःसुखप्रदः इदा
नींश्रोतुमिच्छामोयममार्गंभयप्रदम् ४

हरिः सएवलोकः भक्तानांनिवासस्थानंतस्मैतत्प्राप्तयएवनतुस्वर्गार्थंतस्यविना
शित्वेनतुच्छफलत्वादित्यर्थः २ प्रातःकालेहुताएवहुताअग्नयोयैस्ते मुनयःदानमानादिभिः सत्कृतंसिंहासनेचासीनंसूतं इदं-
वक्ष्यमाणंआदरात् पप्रच्छुः ३ ऋषिभिस्तुअस्मिन्ग्रंथेनिरूपितस्यसद्गतिदुर्गतिप्रदस्य धर्माधर्मस्यएकएवप्रश्नः [illegible]क-
थितइतिद्वाभ्यांभवतासर्वज्ञेनसम्यक् तेचिरिभिसंभवतिनीसुत्युत्कोनिरित्ति देवमार्गःकथितः बहुभिःपुराणैर्निरूपितः इदानीमिति ५

तथाचसंसारदुःखादीन्यपिश्रोतुमिच्छामइतिपूर्वेणैवसंबंधः किंतत् क्लेशक्षयसाधनंतैः संसारदुःखैर्यः क्लेशस्तस्यक्षयसाधनंचसंसारदुःखा नांक्लेशस्यक्षयः केनसाधनेनभवतीत्यपिश्रोतुमिच्छामइत्यर्थः किंचार्यः ५ अत्रोत्तरंश्रीभगवद्गरुडसंवादेन सूतउवाच शृणुध्वमिति स्र

तथासंसारदुःखानितत्क्लेशक्षयसाधनम् ऐहिकामुष्मिकान्क्लेशान्यथावद्वक्तुमर्हसि ५ सूतउवाच शृणु ध्वंभोविवक्ष्यामियममार्गंसुदुर्गमम् सुखदंपुण्यशीलानांपापिनांदुःखदायकम् ६ यथाश्रीविष्णुनाप्रोक्तंवैनते यायपृच्छते तथैवकथयिष्यामिसंदेहच्छेदनायवः ७ कदाचित्सुखमासीनंवैकुंठेश्रीहरिंगुरुम् विनयावनतोभू त्वापप्रच्छविनतासुतः ८ गरुडउवाच भक्तिमार्गोबहुविधःकथितोभवतामम तथाचकथितादेवभक्तानां गतिरुत्तमा ९ अधुनाश्रोतुमिच्छामियममार्गंभयंकरम् त्वद्भक्तिविमुखानांचतत्रैवगमनंश्रुतम् १०

सुखदंपूर्वादिमार्गंदुःखदायकं दक्षिणमार्गमित्यग्रेवक्ष्यति ६ भगवद्वाक्यस्यातिप्रामाण्यात्संदेहोनकर्त्तव्यइतिभावः ७ विनयेनअवनतो नम्रः ८ उत्तमागतिःसद्योमुक्तिः क्रममुक्तिश्चेति ९ श्रुतंसर्वशास्त्रेषु स्मृतमितिपाठेमुनिभिः कथितम् १० ॰ ॰

हरिस्मरणात्सुलभोमोक्षः अतस्तद्रहितानिनुशोचन्नाह सुगमंपठनेकठिनंनभवति ११ अतस्त्वामभजतांपापिनाम् १२ अत्रोत्तरंसंग्रा
सव्यासार्ध्याश्रीभगवानुवाच षड्भिरध्यायैः वक्ष्येहमित्यादिनाचपुनः येनमार्गेणयेपापिनः नरकेयांति तानपिवक्ष्यामीत्यन्वयः १३ येहि-
पापरता इत्यादिपदानांपततिनरकेइतितृतीयेनसंबंधः पापरतानिषिद्धाचरणोत्सुकाः दयाधर्मेतिदयानामप्रत्युपकारापेक्षारहितसर्व

सुगमंभगवन्नामजिह्वाचवशवर्तिनी तथापिनरकंयांतिधिग्धिगस्तुनराधमान् ११ अतोमेभगवन्ब्रूहिपापि-
नांयागतिर्भवेत् यममार्गस्यदुःखानियथातेप्राप्नुवंतिवै १२ श्रीभगवानुवाच वक्ष्येहंशृणुपक्षींद्रयम-
मार्गंचयेनये नरकेपापिनोयांतिशृण्वतामपिभीतिदम् १३ येहिपापरतास्तार्क्ष्यदयाधर्मविवर्जिताः दुष्टसंगाश्चस
च्छास्त्रसत्संगतिपराङ्मुखाः १४ आत्मसंभावितास्तब्धाधनमानमदान्विताः आसुरंभावमापन्नादैवीसंपद्विवर्जिताः
१५

भूतहितानुचिंतनताधर्मोभगवद्धर्मः वर्णाश्रमविहितोवादुष्टानांसंगोयेषांते तथासच्छास्त्रादौपराङ्मुखाश्च १४ आत्मनिस्वस्मिन्नेव
संभाविताः प्रतिष्ठितावयमितिमन्यमानाः अतएवस्तब्धाअनम्राः पूज्यानपिननमंतीत्यर्थः धनेनयोमानः मदश्चतेन आसुरंभावंदंभोदर्पो
भिमानश्चेत्यादिभगवतोक्तः दैवीसंपदभयंसत्वसंशुद्धिरित्यादिचगीतायांप्रोक्ता १५

एवंभूतायत्प्राप्नुवंतितत्शृणु अनेकेति अनेकेषुपरदारपरद्रव्यहरणात्मकेषुमनोरथेषुप्रवृत्तंचित्तं अनेकचित्तं तेनविभ्रांताविक्षिप्ताः मोहमये
नजालेनसमावृताः मत्स्याइवसूत्रमयेन जालेननियंत्रिताः एवंकामभोगेषुप्रसक्ताः अशुचौनरकेपतंति १६ ज्ञानशीलास्तुमोक्षंयांति पा
पशीलानामेवयमयातनाभवंतीत्याह येइति १७ ऐहिकं अस्मिंल्लोकेभोग्यम् ततऐहिकदुःखभोगानंतरम् १८ पापशीलानांयमयातनांविवक्षुः

अनेकचित्तविभ्रांतामोहजालसमावृताः प्रसक्ताःकामभोगेषु पतंतिनरकेशुचौ १६ येनराज्ञानशीलाश्चतेयांतिप-
रमांगतिम् पापशीलानरायांतिदुःखेनयमयातनाम् १७ पापिनामैहिकंदुःखंयथाभवतितच्छृणु ततस्तेमरणंप्रा
प्ययथागच्छंतियातनाम् १८ सुकृतंदुष्कृतंवापिभुक्त्वापूर्वंयथार्जितम् कर्मयोगात्तदातस्यकश्चिद्व्याधिःप्रजायते १९ आ
धिव्याधिसमायुक्तंजीविताशासमुत्सुकम् कालोबलीयानहिवदज्ञातःप्रतिपद्यते २०

प्रथमंमुनिप्रश्नानुसारेणतस्यैहिकदुःखान्याह-
सुकृतमित्यादिदशभिः पूर्वंबाल्याद्यवस्थायांसुकृतंभुक्त्वातदावार्द्धक्येदुष्कृतकर्मयोगाद्व्याधिःस्यादित्यर्थः १९ आधिर्मरणभयान्मानसीव्यथाते
नैवबहुवर्द्धमानोव्याधिश्चताभ्यांसम्यग्यातिव्याकुलतातयायुक्तम् तथापिजीवितस्यैव आशायांसमुत्सुकंभोगवासनयासाभिलाषंतंनरंकालः ४
अहिमूषकमिव अज्ञातएवाभिपद्यते तथाहि प्रमत्तमुच्चैरितिकृत्यचिंतयाप्रवृद्धलोभंविषयेषुलालसम् त्वमप्रमत्तःसहसाभिपद्यसे क्षुल्लेलिहानो
हिरिवाखुमंतकइति २०

तत्राप्यंतकालेऽपिनजातः कदर्थुभिर्वेदोयस्यस्वयंभृतैः स्वयंपालितैः पुत्रकलत्रादिभिर्भ्रियमाणःपुष्यमाणःसन्मरणोन्मुखोभवति २१ पापिनामेव अवज्ञाभवतिनतुसुकृतिनामित्याह आस्तइति अवमत्या अवज्ञयाउपन्यस्तंसमीपेप्रक्षिप्तं आहारंगृहपालःश्वाइवाहरन् भुंजानआस्ते आमयावीरोगी २२ कफेनसंरुद्धानाड्योमार्गभूतायस्य तेनउत्क्रमताप्राणवायुनाविवृत्तनेत्रः कासश्वासाभ्यांकृतःआयासोयस्य कंठेघुरघुरइतिशब्दंकरोति २३ परिवीतः परिवेष्टितःवाच्यमानोऽपिबंधोतातेत्याहूयमानोपि २४ एवंव्यापृतात्मा आसक्तचित्तः उरुवेदनयास्तधीः अतएवाविकयुगपद्दर्शनसंदशायापीडयानष्टमतिः मूर्च्छितःसन् रुदतांरोदनंकुर्वतांस्वानांबंधूनांमध्येम्रियतेमरणंप्राप्नोति २५

तत्राप्यजातनिर्वेदोभ्रियमाणःस्वयंभृतैः जरयोपात्तवैरूप्योमरणाऽभिमुखोगृहे २१ आस्तेवमत्योपन्यस्तंगृहपालइवाहरन् आमयाव्यप्रदीप्ताग्निरल्पाहारोल्पचेष्टितः २२ वायुनोत्क्रमतोत्तारःकफसंरुद्धनाडिकः कासश्वासकृतायासःकंठेघुरघुरायते २३ शयानःपरिशोचद्भिःपरिवीतःस्वबंधुभिः वाच्यमानोऽपिनब्रूतेकालपाशवशंगतः २४ एवंकुटुंबभरणेव्यापृतात्माजितेंद्रियः म्रियतेरुदतांस्वानामुरुवेदनयास्तधीः २५

७

अंत क्षणे अंतसमयेदैवीदेवानामिवदिव्यदृष्टिः यया दृष्ट्यायमदूतानांप्रत्यक्षदर्शनंभवतीत्यर्थः पुनर्ययासर्वंइहलोकपरलोकरूपंजगत् एकीभूतंस्वसीमासंलग्नमिवप्रजायते अतआश्चर्यदर्शनान्नकिंचिद्वक्तुमिच्छतीत्यर्थः २६ समीपागतैर्याम्यैः हेतुभूतैर्यमदूतैःकृत्वाप्राणाःस्व-



तस्मिन्नंतक्षणेताक्ष्यदैवीदृष्टिःप्रजायते एकीभूतंजगत्सर्वंनकिंचिद्वक्तुमीहते २६ विकलेंद्रियसंघातेचैतन्येज
डतांगते प्रचलंतिततःप्राणायाम्यैर्निकटवर्तिभिः २७ स्वस्थानाच्चलितेश्वासेकल्पाख्योह्यातुरक्षणः शतवृश्चि
कदष्टस्ययापीडासानुभूयते २८ फेनमुद्गिरतेसोथमुखंलालाकुलंभवेत् अधोद्वारेणगच्छंतिपापिनांप्राणवायवः
२९ यमदूतौतदाप्राप्तौभीमौसरभसेक्षणौ पाशदंडधरौनग्नौदंतैःकटकटायतौ ३० उर्ध्वकेशौकाककृष्णौवक्रतुं-
डौनखायुधौ सदृष्ट्वात्रस्तहृदयःशकृन्मूत्रंविमुंचति ३१

स्थानात्प्रचलंति आतुरस्यम्रियमाणस्यपापिनःक्षणोपिकल्पाख्यः महत्कं एतयाकल्पसदृशः शतवृश्चिकैर्दष्टस्यपुरुषस्ययापीडाभवति सा एवतेनानुभूयते २८ अथफेनमुद्गिरतेकफंवमति २९ तदाप्राणप्रयाणेप्राप्तौसरभसंसक्रोधंईक्षणंययोः ३० तौदूतौदृष्ट्वाशकृन्मलंमुंचति ३१

पुरुषोजीवः अंगुष्ठमात्रइतिइदंकंठस्थानेषोडशदलकमलेध्यानस्वरूपंभवति नत्वंगुष्ठमात्रंजीवस्वरूपंसर्वशरीरव्यापकत्वात् अतोत्रहृ
दयाकाशेप्रतिष्ठितत्वात्तत्प्रमाणं पुर्यष्टकवेष्टितंसूक्ष्मशरीरवंतं प्रादेशमात्रंपुरुषंवसंतमितिवज्ज्ञातव्यम् ३२ एवंऐहिकदुःखंनिरूप्यइदानीं
परलोकदुःखंनिरूपयति यातनादेहइति यातनाभोगायप्रारब्धकर्मणास्वभवदुत्थिते यथाभगवताश्रीकृष्णेनविनष्टशरीरमपिगुरोःपुत्रंतत्स द्दे

अंगुष्ठमात्रःपुरुषोहाहाकुर्वन्कलेवरात् तदैवगृह्यतेदूतैर्यामैःपश्यन्स्वकंगृहम् ३२ यातनादेहआवृत्यपाशैर्ब-
ध्वागलेबलात् नयतोदीर्घमध्वानंदंड्यंराजभटायथा ३३ तस्यैवंनीयमानस्यदूताःसंतर्जयंतिच प्रवदंतिभयं
तीव्रंनरकाणांपुनःपुनः ३४ शीघ्रंप्रचलदुष्टात्मन्यास्यसित्वंयमालयम् कुंभीपाकादिनरकांस्त्वांनयावोद्यमाचिर-
म् ३५ एवंवाचस्तदाशृण्वन्बंधूनांरुदितंतथा उच्चैर्हाहेतिविलपन्ताड्यतेयमकिंकरैः ३६

शमेवयमलोकादानीयगुरवे
दत्तमितिवत्स्वसदृशेशरीरेआवृत्यनिरुध्यतौदूतौनयतःगृहीत्वागच्छतःअन्यथाकेवलस्यैवतस्यसप्तदशावयवलिंगशरीरात्मकस्यपाशैर्गले
बंधनायोगात् अवयवास्तुज्ञानेंद्रियपंचकंप्राणपंचकंबुद्धिमनसीचेतिइदमेवकर्तृत्वभोक्तृत्वाद्यभिमानेनइहलोकपरलोकगामीव्यवहारिकोजीव
इत्युच्यते इतिदंड्यंसापराधं ३३ ३४ ३५ ३६

तयोर्दूतयोस्तर्जनैस्ताडनैर्निर्भिन्नंविदीर्णंहृदयंयस्यसः स्वमघंपापंस्मरन्नार्त्तःसन् चलतीतिद्वितीयेनान्वयः ३७ क्षुत्तृड्भ्यांपरितोव्याराः त
ता वालुकायस्मिन् निर्गतआश्रमोविश्रामस्थानमुदकंचयस्मिन् तस्मिन् पथिक्षुधादिभिश्चलितुमशक्तोपिकशयाताडितएवकृच्छ्रेणचलति ३८

तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः पथिश्वभिर्भक्ष्यमाण आर्त्तोघंस्वमनुस्मरन् ३७ क्षुत्तृट्परीतोऽर्कदवानला
निलैःसंतप्यमानःपथितप्तवालुके कृच्छ्रेणपृष्ठेकशयाचताडितश्चलत्यशक्तोपिनिराश्रमोदके ३८ तत्रतत्रपतन्श्रां-
तोमूर्च्छितःपुनरुत्थितः यथापापीयसानीतस्तमसायमसादनम् ३९ त्रिभिर्मुहूर्तैर्द्वाभ्यांवानीयतेतत्रमानवः प्रदर्श
यंतिदूतास्ताघोरनरकयातनाः ४० मुहूर्त्तमात्रात्त्वरितंयमंवीक्ष्यभयंपुमान् यमाज्ञयासमंदूतैःपुनरायातिखेचरः ४१
आगम्यवासनाबद्धोदेहमिच्छनयमानुगैः धृतःपाशेनरुदतिक्षुत्तृड्भ्यांपरिपीडितः ४२

अशक्तत्वमेवाह तत्रेति तमसातमोरूपेणयथायमस्यसादनंगृहंप्रतिनीतोभवति ३९ पापाधिक्ये द्वाभ्याम् ४० भयंयातनाम् पुनःस्वगृ-
हंप्रति त्वरितंशीघ्रंदूतैः सहैवखेचरःसन्नाकाशमार्गादेवायातीत्यर्थः ४१ देहंप्रतिप्रवेष्टुमिच्छन् ४२ ॐ ॐ

दत्तमृत्युस्थानादिषुकृतादिभिः ५३ ननुभुंक्तेपिंडेकथंतृप्तिर्नयातीतिचेत्तत्राह पापिनामिति नोपतिष्ठंति तृप्तिंनजनयंति पिंडदानंवर्ष-
पर्यंतंभुंजंति तथापि ५४ ननुकृतान्यपिपिंडदानादीनियदिपापिनांनोपतिष्ठंति तदाकिमनेनपिंडदानेनकृतमप्यकृतंसममेवेतिचेदकृते
नतुप्रेतरूपाभवंतीत्याह भवंतीति ५५ किंच प्रायश्चित्तरूपयमयातनाभोगेनैवपापक्षयेसतिमनुष्यदेहंलभतेनान्यथेत्याह नेति तथा

भुंक्तेपिंडंकृतैर्दत्तंदानंचातुरकालिकम् तथापिनास्तिकस्तार्क्ष्यतृप्तिंयातिनपातकी ५३ पापिनांनोपतिष्ठंति
दानंश्राद्धंजलांजलिः अतःक्षुत्तृष्णाकुलायांतिपिंडदानभुजोपिते ५४ भवंतिप्रेतरूपास्तेपिंडदानविवर्जिताः
आकल्पंनिर्जनारण्येभ्रमंतिबहुदुःखिताः ५५ नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपि अभुक्त्वायातनांजंतुर्मा
नुष्यंलभतेनहि ५६ अतोदद्यात्सुतःपिंडान्दिनेषुदशसुद्विज प्रत्यहंतेविभज्यंतेचतुर्भागैःखगोत्तम ५७

हिचवक्ष्यति एवंदुष्कर्मकर्ताहिभुक्त्वाचनरकान्क्रमात् मानुष्यंलभतेतार्क्ष्यसमीभूतेशुभाशुभइति अतोमनुष्यजन्मनिसंचितसुकृ
तकर्मोदयवशात् कदाचित्सद्गतिरपिभविष्यतीति तस्मादकरणादल्पमपिविहिताचरणमेवयुक्तमितिभावः ॥५७ ७ ७

नरदेवाह सप्रेतःउपजीवति भक्षति ४८ पिंडंपिंडजशरीरंनिष्पन्नः पिंडैरुत्पन्नोदेहोयस्यसजंतुर्जीवः बलंमार्गगमनसामर्थ्यम् ४९ येन



भगद्वयंतुदेहस्यपुष्टिदंभूतपंचके तृतीयंयमदूतानांचतुर्थंसोपिजीवति ४८ अहोरात्रैश्चनवभिःप्रेतःपिंडम-
वाप्नुयात् जंतुर्निष्पन्नदेहश्चदशमेबलमाप्नुयात् ४९ दग्धेदेहेपुनर्देहःपिंडैरुत्पद्यतेखग हस्तमात्रःपुमान्ये
नपथिभुंक्तेशुभाशुभम ५० प्रथमेहनियःपिंडस्तेनमूर्द्धाप्रजायते ग्रीवास्कंधौद्वितीयेनतृतीयाद्धृदयंभवेत् ५१
चतुर्थेनभवेत्पृष्ठंपंचमान्नाभिरेवच षष्ठेनचकटीगुह्यंसप्तमात्सक्थिनीभवेत् ५२ जानुपादौतथाद्वाभ्यांदशमेन्हि
क्षुधातृषा ५३ पिंडजंदेहमाश्रित्यक्षुधाविष्टस्तृषार्दितः एकादशंद्वादशंचप्रेतोभुंक्तेदिनद्वयम् ५४ त्रयोद-
शेह्निप्रेतोयंत्रितोयमकिंकरैः तस्मिन्मार्गेव्रजत्येकोगृहीतइवमर्कटः ५५ षडशीतिसहस्राणियोजनानांप्रमाण
तः यममार्गस्यविस्तारोविनावैतरणींखग ५६

पिंडजदेहेनपथियममार्गे शुभेषुपुण्यफलेषु अशुभंपापफलमेवभुंक्ते ५० पिंडजदेहोत्पत्तिप्रकारमाह प्रथमेहनीति सार्द्धद्वाभ्याम् ५१ ५२ ५३
५४ ५५ ५६

५७ ५८ षोडशपुरनामान्याह सौम्यमित्यादि धर्मभवनं धार्मिकैर्लभ्यं वक्ष्यमाणंदिव्यसभासहितम् याम्यंपापिभिर्लभ्यंयमयाननाम

१-

अहन्यहनिवैप्रेतोयोजनानांशतद्वयम् चत्वारिंशत्तथासंसदिवारात्रेणगच्छति ५७ अतीत्यक्रमशोमार्गेषुराणी
मानिषोडश प्रयातिधर्मराजस्यभवनंपातकीजनः ५८ सौम्यंसौरिपुरंनगेंद्रभवनंगंधर्वशैलागमौ क्रौंचंक्रूरपुरं
विचित्रभवनंबह्वापदंदुःखदम् नानाक्रंदपुरंसुतप्तभवनंरौद्रंपयोवर्षणंशीताढ्यंबहुभीतिधर्मभवनंयाम्यंपुरं
चाग्रतः ५९ याम्यपाशैर्धृतःपापीहाहेतिप्ररुदन्पथि स्वगृहंतुपरित्यज्यपुरंयाम्यमनुव्रजेत् ६०
इतिश्रीसारोद्धारेगरुडपुराणेपापिनांऐहिकामुष्मिकदुःखनिरूपणंनामप्रथमोऽध्यायः १ गरुडउवाच
कीदृशोयमलोकस्यपंथाभवतिदुःखदः यत्रयांतियथापापास्तन्मेकथयकेशव १ ७ ७ ७

पंचकारइत्येवभेदज्ञापनार्थः नतुअग्रतः षोडशपुरेभ्यअग्रेभवतीति ५९ ६० इतिटीकायांप्रथमोऽध्यायः १ ऐहिकामुष्मि
कंदुःखंश्रुत्वासंक्षेपतोऽधुना तदेवविस्तरात्श्रोतुंगरुडः परिपृच्छति कीदृशइति १ ७ ७ ७ ७

आमुष्मिकंसमासेनप्रोक्तंदुःखंनदैवहि द्वितीयेपुनरध्यायेविस्तरेणाहमाधवः २ यममार्गस्यदुःखप्रदत्वमेवाह वृक्षच्छायेत्यादिवैतर



श्रीभगवानुवाच यममार्गंमहद्दुःखप्रदंतेकथयाम्यहम् ममभक्तोऽपितच्छ्रुत्वात्वंभविष्यसिकंपितः २ वृक्ष
च्छायानतत्रास्तियत्रविश्रमतेनरः यस्मिन्मार्गेनचान्नाद्यंयेनप्राणान्समुद्धरेत् ३ नजलंदृश्यतेक्वापितृषितोतीव-
यःपिबेत् तपंतेद्वादशादित्याःप्रलयांतेयथाखग ४ तस्मिन्गच्छतिपापात्माशीतवातेनपीडितः कंटकैर्विध्यतेक्का-
पिक्वचित्सर्पैर्महाविषैः ५ सिंहैर्व्याघ्रैःश्वभिर्घोरैर्भक्ष्यतेक्वापिपापकृत् वृश्चिकैर्दंश्यतेक्वापिक्वचिद्दह्यतिवन्हि-
ना ६ ततःक्वचिन्महाघोरमसिपत्रवनंमहत् योजनानांसहस्रेद्वेविस्तरायामतःस्मृतम् ७ काकोलूकवटगृध्र-
सरघादंशसंकुलम् सदावाग्निचतत्पत्रैश्छिन्नभिन्नःप्रजायते ८ क्वचित्पतत्यंधकूपेविकटात्पर्वतात्क्वचित् गच्छते
क्षुरधारासुशंकुनामुपरिक्वचित् ९ स्खलत्यंधेतमस्युग्रेजलेनिपतनिक्वचित् क्वचित्पंकेजलौकाढ्येक्वचित्संतप्त-
कर्दमे १० ८

णीनिरूपणांतम् ३ ४ ५ ६ ७ सरघा मधुमक्षिका ८ ९ १०

११ १२ क्षारंभस्म महानिम्नानिमहद्गर्त्तानिवप्रप्ररोहणंउच्चप्रदेशारोहणम् १३ तत्रकंदरेदुःखारोहादुःखेनारोढुमशक्या १४ सादृष्टासन्

संतप्तवालुकाकीर्णेध्मातताम्रमयेक्वचित् क्वचिदंगाररााशौचंमहाधूमाकुलेक्वचित ११ क्वचिदंगारवृष्टिश्चशिलावृ-
ष्टिःसवज्रका रक्तवृष्टिःशस्त्रवृष्टिःक्वचिदुष्णांबुवर्षणम् १२ क्षारकर्दमवृष्टिश्चमहानिम्नानिचक्वचित् वप्रप्ररो
हणंक्वापिकंदरेषुप्रवेशनम् १३ गाढांधकारस्तत्रास्तिदुःखारोहाशिलाक्वचित् पूयशोणितपूर्णाश्चविष्ठापूर्णाह्रदाः
क्वचित् १४ मार्गमध्यवहात्युग्राघोरावैतरणीनदी सादृष्टादुःखदाकिंवायस्यावार्त्ताभयावहा १५ शतयोज-
नविस्तीर्णापूयशोणितवाहिनी अस्थिवृंदतटादुर्गामांसशोणितकर्दमा १६ अगाधादुस्तरापापैःकेशशैवालदुर्ग-
मा महाग्रहस्माकीर्णाघोरपक्षिशतैर्वृता १७ आगतंपापिनंदृष्ट्वाज्वालाधूमसमाकुला क्वथ्यतेसानदीतार्क्ष्यकटा
हांतर्घृतंयथा १८ कृमिभिःसंकुलाघोरैःसूचीवक्त्रैःसमंततः वज्रतुंडैर्महागृध्रैर्वायसैःपरिवारिता १९

तीदुःखदाभवतीतिकिंवाच्यम् १५ तामेवनिरूपयति शतयोजनेत्येकादशभिः १६ १७ १८ १९ ५ ५

२० २१ २२ २३ २४ २५ २६ एवंउक्तप्रकारेणबहुविधाक्लेशायस्मिन्इतिकीदृशोयमलोकस्यपंथाभवतिदुःखदइतिप्रथमप्रश्नं
शिशुमारैश्चमकरैर्जलूकामत्स्यकच्छपैः अन्यैर्जलस्थजीवैश्चपूरितामांसभेदकैः २० पतितास्तत्प्रवाहेचक्रंदंति
बहुपापिनः हाभ्रातःपुत्रतातेतिप्रलपंतिमुहुर्मुहुः २१ क्षुधितास्तृषिताःपापापिबंतिकिलशोणितम् सासरिद्रु-
धिरापूरंवहंतीफेणिलंबहु २२ महाघोरातिगर्जंतीदुर्निरीक्ष्याभयावहा तस्यादर्शनमात्रेणपापाःस्युर्गतचेतनाः २३
बहुवृश्चिकसंकीर्णासेविताकृष्णपन्नगैः तन्मध्येपतितानांचत्राताकोपिनविद्यते २४ आवर्त्तशतसाहस्रैःपाताले-
यांतिपापिनः क्षणंतिष्ठंतिपातालेक्षणादुपरिवर्त्तिनः २५ पापिनांपतनायैवनिर्मितासानदीखग नपारंदृश्यतेतस्या-
दुस्तराबहुदुःखदा २६ एवंबहुविधक्लेशेयममार्गेतिदुःखदे क्रोशंतश्चरुदंतश्चदुःखितायांतिपापिनः २७
पाशेनयंत्रिताःकेचित्कृष्यमाणास्तथांकुशैः शस्त्राग्रैःपृष्ठतःप्रोतैर्नीयमानाश्चपापिनः २८ नासाग्रपाशकृष्टाश्च-
कर्णपाशैस्तथापरे कालपाशैःकृष्यमाणाःकाकैःकृष्यास्तथापरे २९ समाधाय यत्रयांति यथापापाइतिद्वितीयस्योत्तर
माह यावदध्यायसमाप्ति एवमिति २७ शस्त्राणांकुंतत्रिशूलादीनांपृष्ठतःप्रोतैरग्रैः २८ नासाग्रेत्युष्ट्रवत् २९ ९

अयोभारच्चयंलोहभारसमूहम् ३० ३१ ३२ ३३ ३४ अनुतापमेवाह मयेतिसप्तभिः देहोयस्यास्तीतिदेहीस्थूलसूक्ष्मदेहा
भिमानिन्जीवइत्यनुतापात्स्वयमेवात्मानंसंबोध्याह मयास्थूलदेहेनदानंनदत्तंनहुतंचेति अतस्त्वयाकर्तृत्वाभिमानिनाकृतंयद्विगर्हितं

ग्रीवाबाहुषुपादेषुबद्धाःपृष्ठेचशृंखलैः अयोभारचयंकेचिद्वहंतःपथियांतिते ३० यमदूतैर्महाघोरैस्ताड्य-
मानाश्चमुद्गरैः वमंतोरुधिरंवक्त्रात्तदेवाश्नंतितेपुनः ३१ शोचंतःस्वानिकर्माणिग्लानिंगच्छंतिजंतवः अतीवदुः
खसंपन्नाःप्रयांतियममंदिरम् ३२ तथाचसव्रजन्मार्गेपुत्रपौत्रइतिब्रुवन् हाहेतिप्ररुदन्नित्यमनुतप्यतिमंद-
धीः ३३ महतापुण्ययोगेनमानुषंजन्मलभ्यते तत्प्राप्यनकृतोधर्मःकीदृशांहिमयाकृतम् ३४ मयानदत्तंनहुतं
हुताशनेतपोनतप्तंत्रिदशानपूजिताः नतीर्थसेवाविहिताविधानतोदेहिन्कचिन्निस्तरयत्त्वयाकृतम् ३५

त्यागरूपंकर्म तत्तमेव निस्तर भोक्तृत्वाभिमानिनातत्फलंभुंक्ष्वेत्यर्थः अत्रत्वयेति लोकोक्त्यापरत्वापरत्वनिर्देशः पौनःपुन्यंचेति ३५

3738

गोविप्राणांवृत्तिराजीविका तदर्थं अणुस्वल्पमपिधनादिकंनअकारि नकृतंमयेति ३७ नित्यदानं अन्नादिकंगवाह्निकेएक स्यागोरेकाह-
तृप्तिजनकंतृणादि तथाह्निकमितिपाठे आह्निकंस्नानंसंध्यांजपंहोमंस्वाध्यायंदेवतार्चनमितिश्रुत्युक्तम् आवश्यकंकर्म किंच वेदशास्त्रा



नपूजिताविप्रगणाःसुरापगानचाश्रिताःसत्पुरुषानसेविताः परोपकारानकृताःकदाचनदेहिन् कश्चिन्निस्तरयत्त्व-
याकृतम् ३६ जलाशयोनैवकृतोहिनिर्जलेमनुष्यहेतोःपशुपक्षिहेतवे गोविप्रवृत्त्यर्थमकारिनाण्वपिदेहिन्कश्चि-
न्निस्तरयत्त्वयाकृतम् ३७ ननित्यदानंनगवाह्निकंकृतंनवेदशास्त्रार्थवचःप्रमाणितं श्रुतंपुराणंनचपूजितो-
ज्ञोदेहिन्कश्चिन्निस्तरयत्त्वयाकृतम् ३८ भर्तुर्मयानैवकृतंहितंवचःपतिव्रतंनैवकदापिपालितम् नगौरवंक्का-
पिकृतंगुरूचितंदेहिन्कश्चिन्निस्तरयत्त्वयाकृतम् ३९ नधर्मबुद्ध्यापतिरेवसेवितोवह्निप्रवेशोनकृतोमृतेपतौ वै-
धव्यमासाद्यतपोनसेवितंदेहिन्कश्चिन्निस्तरयत्त्वयाकृतम् ४०

णामर्थंअवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभमित्यादियथार्थवचःन-
प्रमाणितं नास्तिकतयाप्रमाणंनकृतंज्ञस्तद्वक्ता ३८ हितंममैवकुरवदंभर्तुर्वचः गुरूणांश्वश्र्वादीनांउचितंगौरवंचरणसेवादिकंक्कापिकदाचिद् १०
पिनकृतम् ३९ पतिसेवनमेवस्त्रीणांपरमोधर्मइतिबुद्ध्यापतिनैवसेवितः किंतुदांभिकामुंडाःसेविताः ४०

तपःसेवनमेवाह मासोपवासैरिति बहुदुःखानांवैधव्यपराधीनतादीनांपूर्वजन्मनिकृतैर्विकर्मभिर्निषिद्धाचरणैः मयाजीवेननारीशरीरं-
लब्धमित्यत्रस्थूलशरीराभिप्रायेणजीवस्योक्तिः किंच सूक्ष्मशरीराभिमानवतिजीवेतुवासनानुसारेणैवपुरंजनवन्नरनारीत्वं नतुवास्तवमिति

मासोपवासैर्नविशोषितंमयाचांद्रायणैर्वानियमैःसविस्तरैः नारीशरीरंबहुदुःखभाजनंलब्धंमयापूर्वकृतैर्विकर्म-
भिः ४१ एवंविलप्यबहुशोसंस्मरन्पूर्वदैहिकम मानुषत्वंममकुतइतिक्रोशन्प्रसर्पति ४२ दशसप्तदिनान्येकोवा
युवेगेनगच्छति अष्टादशेदिनेतार्क्ष्यप्रेतःसौम्यपुरंव्रजेत् ४३ तस्मिन्पुरवरेरम्येप्रेतानांचगणोमहान् पुष्पभ-
द्रानदीतत्रन्यग्रोधःप्रियदर्शनः ४४ पुरेतत्रसविश्रामंप्राप्यतेयमकिंकरैः दारापुत्रादिकंसौख्यंस्मरतेतत्रदुःखि-
तः ४५ धनानिभृत्यमात्राणिसर्वंशोचतिवैयदा तदाप्रेतांस्तुतत्रत्याःकिंकराश्चेदमब्रुवन् ४६ ७ ७

तदुक्तंश्रीरामस्वामिनातारांप्रति नस्त्रीपुमान्वाषंढोवाजीवः सर्वगतोव्ययः एकएवाद्वितीयोयमाकाशवदलेपकइति ४१ एवमनुतापंनि
रूप्यमार्गगमनंनिरूपयति एवमित्यादि नदीन्यग्रोधयोः संयोगादस्यपुरस्यसौम्यत्वंरम्यत्वंचेति अन्यत्रवृक्षच्छायानतत्रास्तिनजलं
दृश्यतेक्वचिदितिनिरूपणादेतद्विपरीतत्वम् ४३ ४४ ४५ तत्रत्याःसौम्यपुरवासिनः ४६ ७ ७ ७

चिरंयाहिवर्षपर्यंतंगच्छ ४७ हेपरलोकपांथ त्वंसंबलंसम्यगप्रतिहतंबलंयस्येति संबलोयमस्तस्यबलंपराक्रमंनोजानासि किंच अध्वगा
नांअध्वनियममार्गेयुष्मदादिभिःसहगच्छंतीत्यध्वगाः अस्मदादयोदूतास्तेषांबलंनोजानासि किंच संबलाययमार्थनोयतस्सेयथायमो

क्वधनंक्वसुताजायाक्वसुहृत्क्वचबांधवाः स्वकर्मोपार्जितंभोक्तामूढयाहिचिरंपथि ४७ जानासिसंबलबलंबलम-
ध्वगानांनोसंबलाययतस्से परलोकपांथ गंतव्यमस्तितवनिश्चितमेवतेनमार्गेणयत्रभवतिक्रयविक्रयोपि ४८
आबालख्यातमार्गोयंनैवमर्त्यश्रुतस्त्वया पुराणसंभवंवाक्यंकिंद्विजेभ्योपिनश्रुतम् ४९ एवमुक्तस्ततोदूतैस्ता-
ड्यमानश्चमुद्गरैः निपतन्नुत्पतन्धावन्पाशैराकृष्यतेबलात् ५० अत्रदत्तंसुतैःपौत्रैःस्नेहाद्वाकृपयाथवा मा-
सिकंपिंडमश्नातिततःसौरिपुरंव्रजेत् ५१ यातनांनददाति यथायत्नंनकरोषीतिसावज्ञवचनानि अत्रनोइत्यस्यदेहलीदीप
कन्यायेनसर्वत्रसंबंधः यत्रयस्मिन्मार्गेक्रयोविक्रयश्चापिनास्ति तेनगंतव्यमस्तीति ४८ बालानभिव्याप्येत्याबालं आबालैःख्यातःबाला
अपिजानंतीत्यर्थः सचासौमार्गश्चायंनश्रुतःकिम् ४९ ५० गृहात्त्रयोदशेहनिमार्गेव्रजति अष्टादशेहनिसौम्यपुरंप्राप्नोति अत्रसौम्यपुरेमा
सिकमश्नाति त्रैपक्षिकस्यचविश्रामाभावादकथितमपिभोजनंमार्गएवज्ञातव्यम् ५१

तत्रसौरिपुरेकालरूपधृक् कालोयमस्तद्रूपंधरतीतिविशेषणात् यमवज्जंगमस्यापिसौरित्वंसूरः सूर्यस्तस्यापत्यंसौरिस्तस्यपुरमतोस्यसौरिपुरंनाम ५२ ५३ नगेंद्रभवनंनगच्छंतितेनगाः वृक्षास्तेषांइंद्राउच्चतरतरवस्तेषांभवनंस्थानमतोस्यनगेंद्रभवनंनाम तदेवाह तत्रत

तत्रनाम्नास्तिराजावैजंगमःकालरूपधृक् तद्दृष्ट्वाभयभीतोऽसौविश्रामेकुरुतेमतिम् ५२ उदकंचान्नसंयुक्तंभु-
क्तेतत्रपुरेगतः त्रैपक्षिकेवैयद्दत्तंसतत्पुरमतिक्रमेत् ५३ ततोनगेंद्रभवनंप्रेतोयातित्वरान्वितः वनानित-
त्ररौद्राणिदृष्ट्वाक्रंदतिदुःखितः ५४ निर्घृणैःकृष्यमाणस्तुरुदतेचपुनःपुनः मासद्वयावसानेतुतत्पुरंव्यथितोव्र-
जेत् ५५ भुक्त्वापिंडजलंवस्त्रंदत्तंयद्बांधवैरिह कृष्यमाणःपुनःपाशैर्नीयतेऽग्रेचकिंकरैः ५६ मासेतृतीयेसं-
प्राप्तेप्राप्यगंधर्वपत्तनम् तृतीयमासिकंपिंडंतत्रभुक्त्वाप्रसर्पति ५७

त्पुरमार्गेमध्येचरौद्राणि असिपत्रवनानिदृष्ट्वाक्रंदतीति ५४ ५५ ५६ गंधर्वपत्तनंयथासूर्योदयेदृश्यते तथादूरादेवदृश्यमानंसमीपगमनाददृश्यंभवतीतिहेतोः अस्यगंधर्वनगरंनाम ५७

शैलानांपाषाणानांआगमंपतनंयस्मिन्इतिशैलागमंनाम ५८ क्रौंचंक्रुंचुहिंसायामितिधातोर्हिंस्रजनैर्व्याप्तत्वादस्यक्रौंचपुरंनाम ५९ क्रू-
राणांनिर्दयानांपुरमिति ६० आप्यायितः किंचित्तृप्तः ६१ चित्रएवविचित्रः जयएवविजयइतिवत् तस्यविचित्रस्यभवनंमंदिरंयत्र

शैलागमंचतुर्थेचमासिप्राप्नोतिवैपुरम् पाषाणास्तत्रवर्षंतिप्रेतस्योपरिभूरिशः ५८ चतुर्थमासिकंपिंडंभुक्त्वा
किंचित्सुखीभवेत् ततोयातिपुरंप्रेतःक्रौंचंमासेथपंचमे ५९ हस्तदत्तंतदाभुंक्तेप्रेतःक्रौंचपुरेस्थितः यत्पंचमा-
सिकंपिंडंभुक्त्वाक्रूरपुरंव्रजेत् ६० सार्धकैःपंचभिर्मासैर्न्यूनषण्मासिकेभवेत् तत्रदत्तेनपिंडेनघटेनाप्यायितः-
स्थितः ६१ मुहूर्त्तार्द्धंतुविश्राम्यकंपमानःसुदुःखितः तत्पुरंतुपरित्यज्यतर्ज्जितोयमकिंकरैः ६२ प्रयातिवि
चित्रभवनंविचित्रोनामपार्थिवः यमस्यैवानुजोभ्राातायत्रराज्यंप्रशास्तिहि ६३ तंविलोक्यमहाकार्यंयदाभीतः
पलायते तदासंमुखआगत्यकेवर्त्ताइदमब्रुवन् ६४ वयंतेतर्तुकामायमहावैतरणींनदीम् नावमादायसंप्रा-
सायदितेपुण्यमीदृशम् ६५

यस्मिन्विचित्रभवने ६३ ६४ ईदृशंनौकारोहणयोग्यम् ६५ श्रीकृष्णपरमात्मनेप्रणामोस्तु ६५

तदेवाह दानमिति द्वाभ्याम् यात्वयामर्त्यलोके श्रुतासाइयंतवाग्रे वर्त्तमानायस्माद्वितरणाद्गोदानात्तीर्यते तस्माद्वैतरणीति ६५
उपसर्पति समीपे आयास्यति अन्यथायोदानंविनानेतिहार्देवेत्य दानान्निर्वेदवचनम् ६७ निमज्जति निमग्नोभवति ६८ निमज्जिता

यूनं वितरणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः इयं प्रातीर्यते यस्मात्तस्माद्वैतरणीस्मृता ६६ यदि त्वया प्रदत्ता गौस्तदा-
नीमुपसर्पति नान्यथेति वचस्ते पांशुलाहार्दे वभाषते ६७ तं दृष्ट्वा कथ्यते सा तु तादृशी सेति क्रंदते अदत्तदा-
नःपापात्मा तस्यामेवनिमज्जति ६८ तन्मुखे के दृकुं दत्वा दूतैराकाशसंस्थितैः बडिशेन यथा मत्स्यस्तथा पारं प्र-
णीयते ६९ षाण्मासिकं च यत्पिंडं तत्र भुक्त्वा प्रसर्पति मार्गे स विलपन् याति बुभुक्षापीडितो भृशम् ७० सप्तमे
मासिके प्राप्ते पुरं बह्वापदं व्रजेत् तत्र भुंक्ते प्रदत्तं यत्सप्तमे मासि पुत्रकैः ७१ तत्पुरं तु व्यतिक्रम्य दुःखदं पुरमृच्छ-
ति महद्दुःखमवाप्नोति खेगच्छन् खेचरेश्वर ७२ स्वपारप्राप्तिप्रकारमाह तन्मुखइति बडिशं मत्स्यवेधनम् ६९ षाण्मासिकं पिंडं

भुक्त्वापि बुभुक्षापीडितः इत्यत्रापि तथापि नास्ति कस्तार्क्ष्य तृप्तिं यातिन पातकी पापिनां नोपतिष्ठति दाने श्राद्धं जलांजलिरिति पूर्ववज्ज्ञातव्य
म् ७० बह्वापदं बहुविधा आपदः यस्मिन्निति बह्वापदं नाम ७१ खे किंचिन्निरालंबमार्गे खगवद्गच्छन् महद्दुःखं प्राप्नोति अतोस्य दुःखदं नाम ७२

नानागणाःक्रंदंतियस्मिन्निति नानाक्रंदंनाम ७३ नानाप्रकारैराक्रंदंतिचतेगणाश्च तानतिदारुणान् दृष्ट्वास्वयमप्यतिदुःखितःसन् आक्रं
दति ७४ पर्ितोदावाग्निनाउपर्य्यगारचृष्ट्यात्वक्रष्टु अतितप्तंचतद्भवनंचेतितप्तभवनंनाम ७५ रौद्राणांभयंकराणांपुरमितिरौद्रपुरं

मास्यष्टमेप्रदत्तंयत्पिंडंभुक्त्वाप्रसर्पति नवमेमासिकंपूर्णेनानाक्रंदपुरंव्रजेत् ७३ नानाक्रंदगणान्दृष्ट्वाक्रंदमानान्
सुदारुणान् स्वयंचशून्यहृदयःसमाक्रंदतिदुःखितः ७४ विहायतत्पुरंप्रेतस्तर्ज्जितोयमकिंकरैः तप्तभवनं
गच्छेद्दशमेमासिकृच्छ्रतः ७५ पिंडदानंजलंतत्रभुक्त्वापिनसुखीभवेत् मासिचैकादशेपूर्णेपुरंरौद्रंसगच्छति
७६ दशैकमासिकंतत्रभुंक्तेदत्तंसुतादिभिः सार्द्धेचैकादशेमासिपयोवर्षणमृच्छति ७७ मेघास्तत्रप्रवर्षंति
प्रेतानांदुःखदायकाः न्यूनाब्दिकंचयच्छ्राद्धंतत्रभुंक्तेसदुःखितः ७८ संपूर्णेतुततोवर्षेशीताढ्यंनगरंव्रजेत्
हिमाच्छतगुणंतत्रमहाशीतंपतत्यपि ७९ शीतार्तःक्षुधितःसोऽपिवीक्षतेहिदिशोदश तिष्ठतेबांधवःकोपियो-
मेदुःखंव्यपोहति ८०

नाम ७६ पयसांसंतप्तजलानांवर्षणंवृष्टिर्यस्मिन्निति पयोवर्षणंनामपुरमृच्छति कृच्छ्रगतास्मिन्नि[illegible]
त्यर्थः ७७ ७८ हिमादपिशतगुणेनशीतेनाढ्यंयुक्तंभवतीतिशीताढ्यंनाम ७९ व्यपोहति दूरीकरोति ८० ५ ५

तादृशं यादृशेन एवदुःखंयाति ८१ यमपुरयातनासान्निध्याद्बहुप्रकारंभीतेर्भयंयस्मिन्निति बहुभीतिपुरंनाम तस्मिन्नेवहस्तमात्रं
पिंडजंदेहंत्यजति ८२ वायुरित्युपलक्षणं वाय्वादिसप्तदशतत्त्वात्मकलिंगशरीराभिमानीजीवः यातनादेहंप्रारब्धकर्मभोगयस्त्वमवद्ध-

किंकरास्तेवदंत्यत्र कृतंपुण्यंहितादृशम् भुक्त्वाचवार्षिकंपिंडं धैर्यमालंबतेपुनः ८१ ततःसंवत्सरस्यांतेप्रत्यासन्ने
यमालये बहुभीतिपुरंगत्वाहस्तमात्रंसमुत्सृजेत् ८२ अंगुष्ठमात्रोवायुश्च कर्मभोगायखेचर यातनादेहमासा-
द्यसहयाम्यैःप्रयातिच ८३ और्ध्वदैहिकदानानियैर्नदत्तानिकाश्यप एवंकष्टेनतेयांतिगृहीता दृढबंधनैः ८४
धर्मराजपुरेसंतिचतुर्द्वाराणिखेचर तत्रायंदक्षिणद्वारमार्गस्तेपरिकीर्तितः ८५ अस्मिन्पथिमहाघोरेक्षुत्तृषाश्रम-
पीडिताः यथायांतितथाप्रोक्तं किंभूयःश्रोतुमिच्छसि ८६ इतिश्रीगरुडपुराणेसारोद्धारेयममार्गनिरूपणोनाम-
द्वितीयोऽध्यायः

त्वितं स्वसदृशंशरीरंसमाश्रितः सन् ८३ कीदृशोयमलोकस्यपंथाः यत्रयांति पथेतिप्रश्नस्योत्तरमुपसंहरति एवमिति ८४ ८५
८६ इतिश्रीगरुडपुराणेसारोद्धारे यममार्गनिरूपणे टीकायां द्वितीयोऽध्यायः २ ७ ७ ७ ७

यातनादेहमाश्रित्यकर्मभोगाययांतिते इतिश्रुत्वातुगरुडोयातनामेवपृच्छति १ गत्वायमपुरंपापायमंदृष्ट्वासकिंकरम् भुंजंतियातनामाहत्य तीयइतिमाधवः २ १आद्यंतमिति आदिमारभ्य अंतपर्यंतम् ३ ४ तत्रदक्षिणद्वारे ५ ६ ७ ८ केतेश्रवणाइत्यपेक्षायामाह

गरुडउवाच यममार्गमतिक्रम्यगत्वापापीयमालये कीदृशींयातनांभुंक्तेतन्मेकथयकेशव १ श्रीभगवानुवाच आद्यंतंचप्रवक्ष्यामिशृणुष्वविनतात्मज कथ्यमानेपिनरकेत्वंभविष्यसिकंपितः २ चत्वारिंशद्योजनानिचतुर्युक्तानिकाश्यप बहुभीतिपुरादग्रेधर्मराजपुरंमहत् ३ हाहाकारसमायुक्तंदृष्ट्वाक्रंदतिपातकी तत्क्रंदितंसमाकर्ण्ययमस्यपुरचारिणः गत्वाचतत्रतेसर्वेप्रतीहारंवदंतिहि धर्मध्वजःप्रतीहारस्तत्रतिष्ठतिसर्वदा ५ सगत्वाचित्रगुप्तायब्रूतेतस्यशुभाशुभम् ततस्तंचित्रगुप्तोपिधर्मराजंन्यवेदयत् ६ नास्तिकायेनरास्तार्क्ष्यमहापापरताःसदा तांश्चसर्वान्यथायोग्यंसम्यक्जानातिधर्मराट् ७ तथापिचित्रगुप्तायतेषांपापंसपृच्छति चित्रगुप्तोपिसर्वज्ञःश्रवणान्परिपृच्छति ८ श्रवणाब्रह्मणःपुत्राःस्वर्गपातालचारिणः दूरश्रवणविज्ञानादूरदर्शनचक्षुषः ९ तेषांपत्न्यस्तथाभूताःश्रवण्यःपृथगाह्वयाः स्त्रीणांविचेष्टितंसर्वंताविजानंतितत्त्वतः १०

ब्रह्मणःपुत्रा इतिसप्तभिः दूरात्श्रवणंविशेषंज्ञानंयेषांते दूरदर्शने दूरगतवस्तुप्रत्यक्षकरणेचक्षुर्येषांते ९ पृथक्स्त्रीवाचकं आह्वयंनामयासांताः १०

तेश्रवणास्ताःश्रवण्यश्चेति ११ १२ १३ १४ १५ आदित्यादयोऽपिनरस्य वृत्तंशुभाशुभाचरणंजानंति साक्षितयापश्यंतीत्यर्थः द्यौरंतरिक्षंतदंतर्गतग्रहनक्षत्रादयोवाहृदयं अंतरात्मा अहंकारादीनांदेवताउभेइतिसंध्यभाव आर्षः धर्मःहरेःहृदयादुत्पन्नोयः १६ सर्वतः सर्वेष्वेतेधर्मराट्चित्रगुप्ताद

नरैःप्रच्छन्नंप्रत्यक्षंयत्प्रोक्तंचकृतंचयत् सर्वमावेदयंत्येवचित्रगुप्तायतेचताः ११ चारास्तेधर्मराजस्यमनुष्याणांशुभाशुभम् मनोवाक्कायजंकर्मसर्वंजानंतितत्वतः १२ एवंतेषांशक्तिरस्तिमर्त्यामर्त्याधिकारिणाम् कथयंतिनृणांकर्मश्रवणाःसत्यवादिनः १३ व्रतैदानैश्चवसत्योक्त्यायस्तोषयतितान्नरः भवंतितस्यतेसौम्याःस्वर्गमोक्षप्रदायिनः १४ पापिनांपापकर्माणिज्ञात्वातेसत्यवादिनः धर्मराजपुरःप्रोक्ताजायंतेदुःखदायिनः १५ आदित्यचंद्रावनिलोनलश्च द्यौर्भूमिरापोहृदयंयमश्च अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तम् १६ धर्मराजश्चित्रगुप्तःश्रवणाभास्करादयः कायस्थंतत्रपश्यंतिपापंपुण्यंचसर्वशः १७

यः तत्रस्वस्थानेस्थिताएवकायस्थंशरीरेस्थितंयत्पापंपुण्यंचततत्सर्वंपश्यंतीत्यर्थः कायस्थमिति पापपुण्यस्यैवविशेषणंनतुजातिपरंयेकेचिच्चित्रगुप्तंकायस्थंजातिविशेषंवदंति तन्ननहितस्मिन्परलोकेकश्चिज्जातिविशेषोस्ति नचलेकादेवजातिरेव यदिजातिविशेषश्चेत्तदातुकायस्थःपश्यति इत्येवपाठःस्यात् सतुकस्मिन्नपिपुस्तकेनास्ति अतोयदनवद्यंतत्ग्राह्यमिति किंच १७

चित्रगुप्तस्यद्वादशपुत्राः संति तेषांवंशोद्भवाइमेभूमिस्थाःकायस्थाभवंति इत्यपिबहुमुखगतकथानकंभवति नतुग्रंथांतरेलोकव्यवहारेवा



एवंकृतनिश्चयंकृत्वापापिनांपातकंयमः आहूयतान्निजंरूपंदर्शयत्यतिभीषणम् १८ पापिष्ठास्तेप्रपश्यंतियमरूपंभ-
यंकरम् दंडहस्तंमहाकायंमहिषोपरिसंस्थितम् १९ प्रलयांबुदनिर्घोषंकज्जलाचलसन्निभम् विद्युत्प्रभायु-
धैर्भीमंद्वात्रिंशद्भुजसंयुतम् २० योजनत्रयविस्तारंवापीतुल्यविलोचनम् दंष्ट्रोकरालवदनंरक्ताक्षंदीर्घनासि
कम् २१ मृत्युज्वरादिभिर्युक्तश्चित्रगुप्तोपिभीषणः सर्वेदूताश्चगर्जंतियमतुल्यास्तदंतिके २२ तंदृष्ट्वाभयभीत-
स्तुहाहेतिवदतेखलः अदत्तदानःपापात्माकंपतेक्रंदतेपुनः २३ ततोवदतितान्सर्वान्क्रंदमानांश्चपापिनः शोचतः
स्वानिकर्माणिचित्रगुप्तोयमाज्ञया २४ भोभोपापादुराचाराअहंकारप्रदूषिताः किमर्थमर्जितंपापंयुष्माभिर-
विवेकिभिः २५

यदिभवतिचेत्तदाभवतुनाम अत्रापिममनाग्रहइति १८ १९ २० २१ तदंतिकेयम- १५
समीपेचित्रगुप्तोपिभीषणोभयंकरएवास्ति नतुकुंडलालंकृतइति २२ २३ २४ २५ ७ ७

२६ तथैवात्यंतहर्षेणैवभोग्याभोक्तुंयोग्याएव २७ २८ संभावितानांपापापराधंराजकर्द्दमराडपिक्षमते अप्रतिष्ठितंमामेवमारयति-

कामक्रोधाद्युदुत्पन्नंसंगमेनचपापिनाम् तत्पापंदुःखदंमूढाःकिमर्थंचरितंजनाः २६ कृतवंतःपुरायूयंपापा-
न्यत्यंतहर्षिताः तथैवयातनाभोग्याःकिमिदानींपराङ्मुखाः २७ कृतानियानिपापानियुष्माभिःस्वबहून्यपि
तानिपापानिदुःखस्यकारणंचनवंजनाः २८ मूर्खेपिपंडितेवापिदरिद्रेनाश्रियान्विते सबलेनिर्बलेवापिस-
मवर्त्तीयमःस्मृतः २९ चित्रगुप्तस्येतिवाक्यंश्रुत्वातेपापिनस्तदा शोचंतःस्वामिकर्माणितूष्णींतिष्ठंतिनिश्च-
लाः ३० धर्मराजोपितान्दृष्ट्वाचोरवन्निश्चलस्थितान् आज्ञापयतिपापानांशास्तिंचैवयथोचिताम् ३१ ततस्तेनिर्द
याःदूतास्ताडयित्वावदंतिच गच्छपापिन्महाघोरान्नरकानतिभीषणान् ३२ यमाज्ञाकारिणोदूताःप्रचंडचंडका-
दयः एकपाशेनतान्बध्वानयंतिनरकान्प्रति ३३

इतिमामंस्थाइत्याह मूर्खेपीति २९ ३० चौरोयथाचौ-
र्येकर्मणिज्ञातेसतिस्वनिश्चलोभवति तद्वदित्यर्थः शास्तिंप्रायश्चित्तरूपांयातनाम् ३१ ३२ ३३ ५ ५

तत्रनरकतटे ३४ अधोमुखंवध्वा ३५ ३६ ३७ ३८ ३९ दुष्टचेष्टितंदुष्टाचरणंकिमर्थंकृतमितिशेषः ४० बलिमिति
वैश्वदेवादिकमप्यकृतमित्यर्थः ४१ किंच त्वयातुयातनानिवर्त्तकंयमचित्रगुप्तयोर्ध्यानंमंत्रजपंचापिनकृतमित्याहुः यमस्येति ध्यानमंत्रौ

तत्रवृक्षोमहानेकोज्वलदग्निसमप्रभः पंचयोजनविस्तीर्णएकयोजनमुच्छ्रितः ३४ तद्वृक्षेश्रृंखलैर्बध्वाऽधोमुखं
प्रहरंतिते रुदंतिज्वलितास्तत्रतेषांत्राताननविद्यते ३५ तस्मिन्वैशाल्मलीवृक्षेलंबंतेनेकपापिनः क्षुत्पिपा
सापरिश्रांतायमदूतैश्चताडिताः ३६ क्षमध्वंभोपराधंमेकृतांजलिपुटाइति विज्ञापयंतितान्दूतान्पापिष्ठास्तेनिरा-
श्रयाः ३७ पुनःपुनश्चतेदूतैर्हन्यंतेलोहयष्टिभिः मुद्गरैस्तोमरैःकुंतैर्गदाभिर्मुसलैर्भृशम् ३८ ताडनाच्चैवनिश्चेष्टा-
मूर्छिताश्चभवंतिते तथानिश्चेष्टितान्दृष्ट्वाकिंकरास्तेवदंतिहि ३९ भोभोपापादुराचाराः किमर्थंदुष्टचेष्टितम् सुलभा-
निनदत्तानिजलान्यन्नान्यपिकचित् ४० ग्रासार्द्धमपिनोदत्तंनश्ववायसयोर्बलिम् नमस्कृत्वानातिथयोनकृतंपितृतर्पणम्
४१ यमस्यचित्रगुप्तस्यनकृतंध्यानमुत्तमम् नजप्तश्चतयोर्मंत्रोनभवेद्येनयातना ४२ मंत्रमहोदधावुक्तोनद्यथा पाथःसंयुतमेघस-



न्निभतनुः प्रद्योतनस्यात्मजोनृणांपुण्यकृतांशुभावहवपुः पापीयसांदुःखकृत् श्रीमान्दक्षिणदिक्पतिर्महिषगोभूषांबरालंकृतोध्येयःसंयम-

नीपतिः पितृगणस्वामीत्यर्थोऽयं वदं सूत्र १ अयस्तोयं महामंत्रः सकलापद्विनाशनः नरकप्राप्तिरुद्धास्याधमभीतिनिवर्त्तक इति २ किरीटोज्ज्वलंव-
स्त्रभूषाभिरामं विचित्रासनासीनमिंदुप्रभास्यम् नृणां पापपुण्यानि पत्रे लिखंतं भजे चित्रगुप्तं सस्तायंयमस्य ३ सिद्धं मंत्रमिमं पुंसां जपतोऽचित्रगुप्तकः

नापि किंचित् कृतं तीर्थं पूजिता नैव देवताः गृहाश्रमस्थितेनापि हंतकारोऽपि नो धृतः ४३ शुश्रूषितोऽश्वनो संतो भुंक्ष्व पापफलं
स्वकम् यतस्त्वं धर्महीनोऽसि ततः संताड्यते भृशम् ४४ क्षमापराधं कुरुते भगवान् हरिरीश्वरः वयं तु पापसाधनां दंडदा
हितदाज्ञया ४५ एवमुक्त्वा च ते दूता निर्दयं ताडयंति तान् ज्वलदंगारसदृशाः पतितास्ताडनादधः ४६ पतनात्तस्य पत्रे
श्व गात्रच्छेदो भवेत्ततः तानधः पतितान् श्वानो भक्षयंति रुदंति ते ४७ रुदंतस्ते ततो दूतैर्मुखमापूर्य रेणुभिः निबध्य
विविधैः पाशैर्हन्यंते केऽपि मुद्गरैः ४८ पापिनः केऽपि भिद्यंते क्रकचैः काष्ठवद्द्विधा क्षिप्त्वा चान्ये धरापृष्ठे कुठारैः खंडशः कृ-
ताः ४९

प्रसन्नो गणयेत्पुण्यं पापं नैव कदाचनेति ४ अत्र रहस्यत्वान्मंत्रौ न लिखितौ तद्गुरुमुखाज्ज्ञातव्यौ ४२ नो धृतः न निष्काशितः ४३ ४४ समर्थो भोपराधं
भ एतस्योत्तरमाह अपराधे क्षमा इति मा प्रार्थयं तु हरिः कुरुते वदयेद इदं किमर्थं नोक्तं यत्रानंतापराधानां क्षमा स्यादिति भावः ४५ ४६ ४७ ४८ ४९

अवटेगर्त्ते अर्द्धखात्वाकटिपर्य्यंतंरजोभिः पूरयित्वादृढलक्ष्यंकुर्वंत्यर्थः ५० उल्मुकैर्ज्वलत्काष्ठैश्चपरितःसमंताद्वेष्टयित्वाभृशमत्यंतंध्मायंतेभ-
स्मीकुर्वंते ५१ वटोवटकस्तद्वत्प्रक्षिप्यंते ५२ शलाकयाऊर्ध्वाधोमुखंक्रियंते ५३ ५४ आमिषगृध्रुभिर्मांसलुब्धैःशिरोदेशेमस्तकेशिरोदेशेइ-



अर्धखात्वावटेकेचिद्दिह्यंतेमूर्ध्निसायकैः अपरेयंत्रमध्यस्थाःपीड्यंतेचेक्षुदंडवत् ५० केचित्प्रज्वलमानैस्तुसांगारैः
परितोभृशम् उल्मुकैर्वेष्टयित्वाचध्मायंतेलोहपिंडवत् ५१ केचित्घृतमयेपाकेतैलपाकेतथापरे कटाहक्षिप्तवटवत्
प्रक्षिप्यंतेयतस्ततः ५२ केचिन्मत्तगजेंद्राणांक्षिप्यंतेपुरतःपथि बध्वाहस्तौचपादौचक्रियंतेकेप्यधोमुखाः ५३ क्षिप्यंते
केपिकूपेषुपात्यंतेकेपिपर्वतात् निमग्नाःकृमिकुंडेषुतुद्यंतेकृमिभिःपरे ५४ वज्रतुंडैर्महाकाकैर्गृध्रैरामिषगृध्नुभिः
निष्कृष्यंतेशिरोदेशेनेत्रेवास्येचचंचुभिः ५५ ऋणंवैप्रार्थयंत्यन्येदेहिदेहिधनंमम यमलोकेमयादृष्टोधनंमेभक्षितंत्व-
या ५६ एवंविवदमानानांपापिनांनरकालये छित्वासंदंशकैर्दूतामांसखंडान्ददंतिच ५७

तिपाठेनाडीस्थाने अत्रकाकावज्रतुंडैर्मस्तकंविदार्य नाडींचोत्पाट्यतदंतर्गतमज्जांमांसंचभक्षयंतीत्यर्थः किंचनेत्रेचापिनिष्कृष्यंते ५५ ५६ ५७

यथानृपस्याधिकारिणः प्रथमंसापराधंसंताड्यपश्चात्कारागारेनृपाज्ञयाप्रक्षिपंति तद्वदत्रापीत्याह एवमिति ५८ अगोचरंवर्णयितुमशक्यंस्वभो-
गवद्यत्वादतः किंवर्णयामीति ५९ घोरेयाःप्रधानाअतिदुःखदाइत्यर्थः ६० ६१ तानेवाह ६२ तामिस्रइतिचिभिःग्रंथविस्तरभयान्नामनिरुक्तिर्न

एवंसंताड्यतान्दूताःसंकृष्ययमशासनात् तामिस्रादिषुघोरेषुक्षिप्यंतेनरकेषुच ५८ नरकादुःखबहुलास्तत्ररक्षसमी-
पतः तेष्वस्तियन्महद्दुःखंतद्वाचामप्यगोचरम् ५९ चतुराशीतिलक्षाणिनरकाःसंतिखेचर तेषांमध्येघोरतमाधौरे
यास्त्वेकविंशतिः ६० तामिस्रोलोहशंकुश्चमहारौरवशाल्मली रौरवःकुड्मलःकालसूत्रकःपूतिमृत्तिका ६१ संघा-
तोलोहितोदश्चसविषःसंप्रतापनः महानिरयकाकोलौसंजीवनमहापथौ ६२ अवीचिरंधतामिस्रःकुंभीपाकस्तथै-
वच संप्रतापननामैकस्तपनस्त्वेकविंशतिः ६३ नानापीडामयाःसर्वेनानाभेदैःप्रकल्पिताः नानापापविपाकाश्च
किंकरौघैरधिष्ठिताः ६४ एतेषुपतितामूढाःपापिष्ठाधर्मवर्जिताः तत्रभुंजंतिकल्पांतेतास्तानरकयातनाः ६५
यास्तामिस्रांधतामिस्रारौरवाद्याश्चयातनाः भुंक्तेनरोवानारीवामिथःसंगेननिर्मिताः ६६

कृता ६३ नानाप्रकाराणांपापानांविपाकाःफलरूपाश्चेति ६४ ६५ मिथः संगेनपरस्परासक्त्या ६६ ७ ७ ७

यानतामुपसंहरति एवमिति उभयंकुटुंबंस्वदेहंचप्रेत्यपरलोके ६७ उपार्जितंधनंभुंजंति वहवः कर्त्तैवतुनरकंयातीत्याह एकइति भूतद्रो
हेणवैरेणयद्गतंपोषितंतदिदंकलेवरंस्थूलशरीरं इहैवहित्वाकुशलादितरत्पापंतदेवपाथेयंभोग्यंयस्यसकर्त्तैवध्वांतंअंधंतमः नरकंप्रपद्य



एवंकुटुंबंबिभ्राणउदरंभरएववा विसृज्येहोभयंप्रेत्यभुंक्तेतत्फलमीदृशम् ६७ एकःप्रपद्यतेध्वांतंहित्वेदंस्वंकले
वरम् कुशलेतरपाथेयोभूतद्रोहेणयद्भृतम् ६८ दैवेनासादितंतस्यशमलंनिरयेपुमान् भुंक्तेकुटुंबपोषस्यहृत-
द्रव्यइवातुरः ६९ केवलेनह्यधर्मेणकुटुंबभरणोत्सुकः यातिजीवोंधतामिस्रंचरमंतमसःपदम् ७०

ति नतुभोक्तारः तथाचस्मृतिः देशग्रामकुलानिस्युर्भागभांजिकृतादिषु कलौतुकेवलकर्त्ताफलभुक्पुण्यपापयोरिति ६८ ननुपापमपहायकिंन
गच्छेत्तत्राह दैवेनेति तस्यकुटुंबपोषस्य शमलंपापंदैवेन ईश्वरेण प्रापितंभुंक्ते अतःपापत्यागेनस्वतंत्रइतिभावः ६९ ननुकुटुंबपोषणं-
तुविहितमेवतत्राह केवलेनह्यधर्मेणइतितमसानरकस्यचरमंपदंअंतिमस्थानंमहद्दुःखप्रदमित्यर्थः ७०

पुनर्मनुष्यशरीरप्राप्तिकारणमाह अधस्तादिति नरलोकस्यमनुष्यदेहप्राप्तेरधस्तादर्वाक्यावत्योयातनाः आदिशब्देनसूकरादियोनयोयास्ताःसर्वाःक्रमे
णसंप्राप्य भोगेनक्षीणपापःशुचिःसन् अत्रपुनर्नरत्वंप्राप्नोतीत्यर्थः ७१ इतिटी० तृतीयोऽध्यायः ३ पापान्येवमनुष्याणांयातनादुःख-

अधस्तान्नरलोकस्ययावतीर्यातनादयः क्रमशःसमनुक्रम्यपुनरत्राव्रजेच्छुचिः ७१ इतिश्रीगरुडपुराणेसारो-
द्धारेयमयातनानिरूपणोनाम तृतीयोऽध्यायः ३ गरुडउवाच कैर्गच्छंतिमहामार्गेवैतरण्यांपतंतिकेः कैःपापै
र्नरकेयांतितन्मेकथयकेशव १ श्रीभगवानुवाच सदैवाकर्मनिरताःशुभकर्मपराङ्मुखाः नरकान्नरकंयां-
तिदुःखाद्दुःखंभयाद्भयम् २ धर्मराजपुरेयांतित्रिभिर्द्वारैस्तुधार्मिकाः पापास्तुदक्षिणद्वारमार्गेणैवव्रजंतितत् ३
अस्मिन्नेवमहादुःखेमार्गेवैतरणीनदी तत्रयेपापिनोयांतितानहंकथयामिते ४

दानिच इतिश्रुत्वातुगरुडःपापान्येववि
पृच्छति कैरिति १ अत्रदुःखस्यानंतरंसुखमित्यागमापायित्वंनकिंतुपापिनांदुःखभयानंतरंदुःखभयमेवेतिनिरूपयन् श्रीभगवा
नुवाच २ शास्त्रेषुबहुधाप्रोक्तंनरकप्रदपातकम् तस्यसारंसमुद्धृत्यचतुर्थेप्राहमाधवः १ तत्पुरंप्रति ३ अस्मिन्दक्षिणमार्गे ४

ब्रह्मघ्नाइत्यादिपदानांगच्छंति यममार्गेहीत्यष्टमेनसंबंधः ५ ६, ७ दोषानेवगृण्हातिगुणानांश्लाघांनकरोति मत्सरास्तदुत्कर्षमसह मा



ब्रह्मघ्नाश्चसुरापाश्चगोघ्नावाबालघातकाः स्त्रीघातीगर्भपातीचयेचप्रच्छन्नपापिनः ५ येहरंतिगुरोर्द्रव्यंदेवद्रव्यं द्विजस्यवा स्त्रीद्रव्यहारिणोयेचबालद्रव्यहराश्चये ६ येऋणंनप्रयच्छंतियेवैन्यासापहारकाः विश्वासघातका- येचसविषान्नेनमारकाः ७ दोषग्राहीगुणाश्लाघीगुणवत्सुचमत्सराः नीचानुरागिणोमूढाःसत्संगतिपराङ्मुखाः ८ तीर्थसज्जनसत्कर्मगुरुदेवविनिंदकाः पुराणवेदमीमांसान्यायवेदांतदूषकाः ९ हर्षितादुःखितंदृष्ट्वाहर्षे तेदुःखदायकाः दुष्टवाक्यस्यवक्तारोदुष्टचित्ताश्चयेसदा १० नशृण्वंतिहितंवाक्यंशास्त्रवार्त्ताकदापिन आ- त्मसंभाविताःस्तब्धामूढाःपंडितमानिनः ११ एतेचान्येचबहवःपापिष्ठाधर्मवर्जिताः गच्छंतियममार्गेहिरोदमा नादिवानिशम् १२ यमदूतैस्ताड्यमानायांतिवैतरणींप्रति नस्यांपततियेपापास्तानहंकथयामिते १३

नाः नीचेष्वेव अनुरागः स्नेहोयेषाम् ८ ९ १० ११ १२ १३ ७ ७ ७

१४ १५ १६ एतावद्दानंतुभ्यंप्रदास्यामीतिप्रतिश्रुत्यप्रतिज्ञाय यथार्थंयथाप्रतिज्ञंआगच्छदानंदास्यामीत्याहूय पश्चान्नास्तितु
भ्यंनददामीतिब्रूयात् १७ स्वदत्तस्यापिदानस्ययोहर्त्ता अनुतापकः वृथैवदत्तमितिपश्चात्तापकरः दुर्वाक्यैर्विप्रस्यैवसंतापकरोक्त दा

मातरंयेवमन्यंतेपितरंगुरुमेवच आचार्यंचापिपूज्यंचतस्यांमज्जंतितेनराः १४ पतिव्रतांसाधुशीलांकुलीनांविन
यान्विताम् स्त्रियंत्यजंतियेद्वेषाद्वैतरण्यांपतंतिते १५ सतांगुणसहस्रेषुदोषानारोपयंतिये तेष्ववज्ञांचकुर्व-
तिवैतरण्यांपतंतिते १६ ब्राह्मणायप्रतिश्रुत्ययथार्थंनददातियः आहूयनास्तियोब्रूयात्तयोर्वासश्चसंततम् १७
स्वयंदत्तापहर्त्ताचदानंदत्वानुतापकः परवृत्तिहरश्चैवदानेदत्तेनिवारकः १८ यज्ञविध्वंसकश्चैवकथाभंगकरश्च-
यः क्षेत्रसीमाहरश्चैवयश्चगोचरकर्षकः १९

नेअन्येनदत्तेसति स्वयंदत्तापहर्त्तेत्यादिपदानांवैतरण्यांपतंतिइत्यनेनसंबं-
धः १८ यज्ञेषुद्रव्ययज्ञादिषुविघ्नकर्त्ताहरेः कथायानिवारणकर्त्ता क्षेत्रंइत्युपलक्षणम् ग्रामस्यापिपरंपरागतसीमाहर्त्तागोचरकर्षकः गा-
वश्चरंतियस्मिन्नितिगोचरंवनंभाषायांबीडइतिप्रसिद्धं तस्मिन् कृषिकर्त्ता १९

वृषल्यःस्मृतोकथिताः वैश्यासतीचदासीचकुमारीस्याद्रजस्वला याचसंग्रहणीभार्यावृषल्यःपंचसंस्मृताः वैश्याइत्यत्रवंध्येतिपाठःक्वचित् अ-
न्यत्रयज्ञंविना वेदोक्तयज्ञेतुपशुहिंसाविहितैव तथाचश्रुतिः देवायद्यज्ञंतन्वाना अबध्नन्पुरुषंपशुमिति स्मृतिश्च यज्ञार्थे पशवः 

ब्राह्मणोरसविक्रेतायदिस्याद्वृषलीपतिः वेदोक्तयज्ञादन्यत्रस्वात्मार्थेपशुमारकः २० ब्रह्मकर्मपरिभ्रष्टोमांसभोक्ता-
चमद्यपः उच्छृंखल स्वभावोयःशास्त्राध्ययनवर्जितः २१ वेदाक्षरंपठेच्छूद्रःकापिलेयंपयःपिबेत् धारयेत्ब्रह्म
सूत्रंचभवेद्वाब्राह्मणीपतिः २२ राजभार्याभिलाषीचपरदाराप्रहारकः कन्यायांकामुकश्चैवसतीनांदूषकश्चयः
२३ एतेचान्येचबहवोनिषिद्धाचरणोत्सुकाः विहितत्यागिनोमूढावैतरण्यांपतंतिते २४ सर्वमार्गमतिक्रम्ययां
तिपापायमालये पुनर्यमाज्ञयागत्यदूतास्तस्यांक्षिपंतितान् २५

सृष्टाः स्वयमेवस्वयंभुवा अतस्त्वाघातयाम्यत्रतस्माद्य-
ज्ञेवधोवधइति २० उच्छृंखलः निरंकुशस्वभावः २१ कपिलायागोरिदंकापिलेयं २२ कामुकः कामाभिलाषीसतीनांपति-
व्रतानांदूषकः बलात् शीलभ्रष्टकरः २३ २४ दूताः पुनःप्रत्यागत्यवैतरण्यांतान्क्षिपंति २५ 

ननुपूर्वंनरकेष्वेवकिंनपात्यंतेअतआह यइति धौरेयाणांसर्वनरकेषुमुख्यानांएकविंशतिनरकाणांधुरंयातनाप्रयासंधारयंति इतिधु-
रंधरा एकाएकसर्वनरकाणांदुःखप्रदेत्यर्थः अतोनरकान्विहायपूर्वंवैतरण्यांक्षिपंतीतिभावः २६ दानाकृपायंविनैवतस्यांदुःखंभजं

यावैधुरंधरासर्वधौरेयाणांखगाधिप अतस्तस्यांप्रक्षिपंतिवैतरंण्यांचपापिनः २६ कृष्णागौर्यैर्दिनोदत्तानो
र्ध्वदेहक्रियाःकृताः तस्यांभुक्त्वामहद्दुःखंयांतिवृक्षंतरोद्भवम् २७ कूटसाक्ष्यंप्रदातारःकूटधर्मपरायणाः छलेना
र्जनसंसक्ताश्चौर्यवृत्याचजीविनः २८ छेदयंत्यतिवृक्षांश्चवनारामविभंजकाः व्रततीर्थंपरित्यज्यविधवाशीलनाशकाः
२९ भर्त्तारंदूषयेन्नारीपरंमनसिधारयेत् इत्याद्याःशाल्मलीवृक्षेभुंजंतेबहुताडनम् ३० ताडनात्पतितान्दूताःक्षिपं-
तिनरकेषुतान् पतंतितेषुयेपापास्तानहंकथयामिते ३१

तीत्याह कृष्णेति कूटसाक्ष्यंमिथ्यासाक्ष्यंविवदतांमध्येयेमिथ्यावा-
दिनंसंतमपंसत्यंवदतीतिब्रुवंतिते कूटधर्मोवेदबाह्यधर्मः छलेनवंचनादिनाअर्जनेधनसंचये कूटसाक्ष्यादयोवृक्षेताडनंभुंजंते इतिवृतीये
नसंबंधः २८ अतिवृक्षानुच्चतरतरून् वनंफलप्रधानं आरामंपुष्पप्रधानम् २९ ३० ३१ ७ ७ ७

नास्तिकाजगत्कर्त्ताईश्वरोनास्तीतिवादकाः दानादिफलंपरलोकेनास्तीतिवादिनोवा भिन्नादूरीकृतापरंपरागतधर्ममर्यादायैस्तेकदर्यास्तु स्मृतावुक्ताः आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयन् देवताऽतिथिभृत्यांश्चसकदर्यइतिस्मृतः प्रायेणार्थःकदर्याणांनसुखायकदाच न इहचात्मोपतापायपरत्रनरकायचेत्यर्थः विषयेष्वेवआत्मामनोयेषांते दांभिकामिथ्याचाराः लोकवंचनायजपतपादौप्रवृत्ताइति कृत

नास्तिकाभिन्नमर्यादाःकदर्याविषयात्मकाः दांभिकाश्चकृतघ्नाश्चतेवैनरकगामिनः ३२ कूपानांचतडागानांवापी-
नांदेवसद्मनाम् प्रजागृहाणांभेत्तारस्तेवैनरकगामिनः ३३ विसृज्याश्नंतियेदारान्शिशून्भृत्यांस्तथागुरून्
उत्सृज्यपितृदेवेज्यांतेवैनरकगामिनः ३४ शंकुभिःसेतुभिःकाष्ठैःपाषाणैःकंटकैस्तथा येमार्गमुपरुंधंतितेवैनर
कगामिनः ३५ शिवंशिवांहरिंसूर्यंगणेशंसद्गुरुंबुधम् नपूजयंतियेमंदास्तेवैनरकगामिनः ३६ आरोप्यदासीं-
शयनेविप्रोगच्छेदधोगतिम् प्रजामुत्पाद्यशूद्रायांब्राह्मण्यादेवहीयते ३७

घ्नाः कृतोपकारनाशकाः ३२ ३३ विसृज्यं-
ति द्वेषात् कृपणतयावा दारादीन्परित्यज्य अश्नंति एकाकिनएवमिष्टान्नंभुंजंति येचपितृदेवानांइज्यांयागंउत्सृज्य वैश्वदेवंअकृत्वा
पितृदेवेज्यमिति पाठेतुपितृदेवानांइज्यंपूज्यंहरिंउत्सृज्यतस्मैअनिवेद्य अश्नंति येतेवैनरकगामिनः ३४ ३५ ३६ प्रजांसंतानं

हीयतेच्युतोभवति ३७ ३८ ३९ अनन्यशरणाश्ववताः स्त्रियश्वतासांस्वकीयानांवैरेणऋतुदानंनददंतिये ४० ४१ ४२ ४३

ननमस्कारयोग्योहिसकदापिद्विजाऽधमः नपूजयंतियेमूढास्तेवैनरकगामिनः ३८ ब्राह्मणानांचकलहंगोयुद्धंकल-
हप्रियाः नवर्जंत्यनुमोदंतेतेवैनरकगामिनः ३९ अनन्यशरणस्त्रीणांऋतुकालव्यतिक्रमं येप्रकुर्वंतिविद्वेषात्ते
वैनरक० ४० येपिगच्छंतिरागांधानरानारींरजस्वलाम् पर्वस्वप्स्वादिवाश्राद्धेतेवैनरक० ४१ येशारीरंमलंवन्हौप्रक्षि
पंतिजलेपिच आरामेपथिगोष्ठेवातेवै० ४२ शस्त्राणांयेचकर्त्तारःशरणांधनुषांतथा विक्रेतारश्चयेतेषांतेवै०४३
चर्मविक्रयिणोवेश्याः केशविक्रेयकास्त्रियः विषविक्रयिणःसर्वेतेवै० ४४ अनाथंनानुकंपंतियेसतांद्वेषकारकाः
विनापराधंदंडंतितेवै० ४५ आशयासमनुप्राप्तान्ब्राह्मणानर्थिनोगृहे नभोजयंतिपाकेपितेवै० ४६ सर्वभूतेष्व
विश्वस्तास्तथातेषुविनिर्दयाः सर्वभूतेषुजिह्मायेतेवैनरकगामिनः ४७

केशोभगरतंविक्रीणंतिताः व्यभिचारोप
जीविन्यइत्यर्थः ४४ ४५ पाकेसत्यपीतिशेषः केपिविश्वासंनकुर्वंतीत्यविश्वस्ताः जिह्माःकुटिलाः ४६ ४७ ७ ७

ब्रियमान् संध्यावंदन कृच्छ्रचांद्रायणादीन् समुपादाय प्रतिज्ञयास्वीकृतयेअजितेंद्रिया अदांतमनसस्त्यजंतितेते ४८ ४९ ५० ५१ ५२



नियमान्समुपादाययेपश्चादजितेंद्रियाः विलोपयंतितान्भूयस्तेवैनरकगामिनः ४८ अध्यात्मविद्यादातारंनेव-
मन्यंतियेगुरुम् तथापुराणवक्तारंतेवैनरकगामिनः ४९ मित्रद्रोहकरायेचप्रीतिच्छेदकराश्चये आशाच्छेदकरा-
येचतेवैनरकगामिनः ५० विवाहंदेवयात्रांचतीर्थसार्थान्विलुंपति सवसेन्नरकेघोरेतस्मान्नावर्त्तनंपुनः ५१ अग्निंद-
द्यान्महापापीगृहेग्रामेतथावने सनीतोयमदूतैश्चवन्हिकुंडेषुपच्यते ५२ अग्निनादग्धगात्रोसौयदाछायांप्रयाचते
नीयतेचतदादूतैरसिपत्रवनांतरे ५३ खङ्गतीक्ष्णैश्चतत्पत्रैर्गात्रच्छेदोयदाभवेत् तदोचुःशीतलच्छायेसुखनि-
द्रांकुरुष्वभो ५४ पानीयंपातुमिच्छन्वैतृषार्त्तोयदियाचते पानार्थंतैलमत्युष्णंतदादूतैःप्रदीयते ५५
पीयतांभुज्यतांपानमन्नमूचुस्तदंनिते पीतमात्रेणतेनैवदग्धांत्रानिपतंतिते ५६



५३ शीतलाछायायस्मिन्निति शीतच्छायंवनंतस्मिन्निति कटाक्षः ५४ ५५ ५६ ५७ ५७ ५७

५७ ५८ यावदाभूतसंप्लवंमहाप्रलयपर्यंतंकुठाराग्निकुंडे घट वत्पच्यंते ५९ ननुदिनांतेब्रह्मणः प्रोक्तोनाशोलोकत्रयस्यवै परार्द्धद्वितयांतेपि
ब्रह्मांडस्यापिसंक्षयः १ इतिपुराणवचनात् कथंमहाप्रलयपर्यंतं पापिनांनरकेनिवासः संभवतिब्राह्मणोदिनांतेएवतेषांविनाशःस्यादितिचेत्तत्रा
ह तस्येति तेपापिनः पुनरुत्पत्तिसमयेतत्रनरकेष्वेव उत्पद्यंते तस्यपापस्य अक्षयंफलंभुंजंति तदुक्तं बृहन्नारदीये निर्गुणोपिनिरानं-

कथंचित्पुनरुत्थायप्रलपंतिस्फदीनवत् विवशाउच्छ्रुसंतश्चतेवक्तुमपिनाशकन् ५७ इत्येवंबहुशस्तास्ताय्यातनाःपा-
पिनोस्मृताः किमेतैर्विस्तरात्प्रोक्तैःसर्वशास्त्रेषु भाषितैः ५८ एवंवैक्लिश्यमानास्तेनरानार्यःसहस्रशः पच्यंतेनर-
केघोरेयावदाभूतसंप्लवम् ५९ तस्याक्षयंफलंभुक्त्वातत्रैवोत्पद्यतेपुनः यमाज्ञयामहींप्राप्यभवंतिस्थावरादयः
६० वृक्षगुल्मलतावल्लीगिरयश्चतृणानिच स्थावराइतिविख्यातामहामोहसमावृताः ६१ दः सर्वात्मासर्वभावनः चरान्स्थावरात्मकं
विश्वंयथापूर्वमकल्पयत् १ स्थावराद्याश्चविप्रेंद्रायत्रयत्रव्यवस्थिताः तस्मात्कृतानांपापानांपुण्यानांचैवसत्तमाः २ अवश्यमेवभोक्तव्यंसर्वथा-
ह्यक्षयंफलम् नाभुक्तं क्षीयतेकर्मकल्पकोटिशतैरपीति ३ स्मृतिश्च निशांतेपुनरुत्थायप्रलयेसल्लयंगतम् ब्रह्माजगन्मयंसर्वंयथापूर्वमकल्प
यत् ४ इतिश्रुतिश्च धातायथापूर्वमकल्पयत् दिवंचपृथिवींचांतरिक्षमथोस्वरिति अतःस्वर्गनरकस्थाःस्वस्वस्थानेष्वेवोत्पद्यशुभाशुभकर्मफल
मक्षयमेवभुंजंतीत्यर्थः ६० ६१

६२ ६३ ६४ इतिटी॰चतुर्थोऽध्यायः ४ श्रुत्वाचपापचिन्हानिगलत्कुष्ठादिकानिच इदानींगरुडस्तानियथापापं विपृच्छति १ मनुजैःपा



कीटाश्चपशवश्चैवपक्षिणश्चजलेचराः चतुराशीतिलक्षेषुकथितादेवयोनयः ६२ एताःसर्वाःपरिभ्रम्यततोयांतिम-
नुष्यताम् मानुषेपिश्वपाकेषुजायंतेनरकागताः तत्रापिपापचिन्हैस्तेभवंतिबहुदुःखिताः ६३ गलत्कुष्ठाश्चजन्मांधाम-
हारोगसमाकुलाः भवंत्येवंनरानार्क्षपापचिन्होपलक्षिताः ६४ इतिश्रीगरुडपुराणेसारोद्धारेनरकप्रदपापचिन्हनिरू-
पणानामचतुर्थोऽध्यायः ४ गरुडउवाच येनयेनचपापेनयद्यच्चिन्हंप्रजायते यांयांयोनिंचगच्छंतितन्मेकथय-
केशव १ श्रीभगवानुवाच यैःपापैर्यांतियांयोनिंपापिनोनरकागताः येनपापेनयच्चिन्हंजायतेममतच्छृणु २
ब्रह्महाक्षयरोगीस्याद्गोघ्नःस्यात्कुब्जकोजडः कन्याघातीभवेत्कुष्ठीत्रयश्चांडालयोनिषु ३ स्त्रीघातीगर्भपातीचपु-
लिंदोरोगवान्भवेत् अगम्यागमनात्षंढोदुश्चर्मागुरुतल्पगः ४ ५

तत्कर्मकृतंयत्पूर्वजन्मनि हरिस्तत्सूचकान्या

ह पापचिन्हानिपंचमे २ ३ पुलिंदोभिल्लःअगम्यास्वगोत्रजा दुश्चर्मागजचर्मः गुरुतल्पगः गुरुकुलस्त्रीकामुकः ४ ५

मतिरक्तांगः कुष्ठविशेषः श्यावदंतः स्वभावतः कृष्णदंतः शावदंतइति पाठेतुशावा अतिसूक्ष्माभोजने बहुदुःखदादंतायस्येतिशावदंतः श्या-
वदंतैस्तुकिंचिद्दुःखानुभवोनास्ति अतःपापचिह्नानामतिदुःखप्रदत्वाच्छ्यावदंतइत्येवयुक्तम् लौल्यादजितेंद्रियत्वात् महोदरः जलोद-

मांसभोक्तातिरक्तांगःश्यावदंतस्तुमद्यपः अभक्ष्यभक्षकोलौल्याद्ब्राह्मणःस्यान्महोदरः ५ अदत्वामिष्टमश्नातिसभ-
वेद्गलगंडवान् श्राद्धेऽन्नमशुचिंदत्वाचित्रकुष्ठीप्रजायते ६ गुरोगर्वेणावमानादपस्मारीभवेन्नरः निंदकोवेदशा-
स्त्राणांपांडुरोगीभवेद्ध्रुवम् ७ कूटसाक्षीभवेन्मूकःकाणःस्यात्पंक्तिभेदकः अनोष्ठःस्याद्विवाहभोजनमांधःपुस्त-
कंहरेत् ८ गोब्राह्मणपदाघातात्खंजःपंगुश्चजायते गद्गदोनृपवादीस्यात्तच्छ्रोताबधिरोभवेत् ९ गरदःस्या-
ज्जडोन्मत्तोस्वल्पारोग्निप्रदायकः दुर्भगःपलविक्रेतारोगवान्परमांसभुक् १० हीनजातोप्रजायेतरत्नानामपहा-
रकः कुनखीस्वर्णहर्तास्याद्धातुमात्रहरोधनः ११

रोगी ५ अपस्मारी मृगीरोगी ७ ८ पादेनताडनात् खंजः प-
ञ्चांगाघातात्पंगुः गद्गदः अस्फुटवक्तातस्यानृपवादस्यश्रोता ९ पलविक्रेतामांसविक्रयी १० कुनखीनिसर्गतःकुत्सितनखः कुष्ठीसदृशः ११

आखुर्मूषकः धान्यंसतुषान्नम् १२ शाकं ... त्वाशिखीमयुरास्यात् हत्वैतस्यसर्वत्रसंबंधः शुभान्मृगमदादीन् गंधान् हत्वाछुच्छुंद-
रिस्यात् भाषायांच्छामचेडइति मधुहत्वादंशः मधुमक्षिकास्यात् १३ १४ रौद्रेणहिंस्रकर्मणाउपजीविकाकर्त्तासार्थान्यात्रिकजनसमू

अन्नहर्त्ताभवेदाखुःशलभोधान्यहारकः चातकोजलहर्त्तास्याद्विषहर्त्ताचवृश्चिकः १२ शाकंपत्रंशिखीहत्वागंधा
न्छुच्छुंदरीशुभान् मधुदंशःपलंगृध्रोलवणंचपिपीलिका १३ तांबूलफलपुष्पादिहर्त्तास्याद्वानरोवने उपानत्तृ-
णकार्पासहर्त्तास्यान्मेषयोनिषु १४ यश्चरौद्रोपजीवीचमार्गेसार्थान्विलुंपति मृगयाव्यसनीयस्तुछागस्याद्वधिकगृ-
हे १५ योमृतोविषपानेनकृष्णसर्पोभवेद्गिरौ निरंकुशःस्वभावःस्यात्कुंजरोनिर्जनेवने १६ वैश्वदेवमकर्त्तारः
सर्वभक्षाश्चयेद्विजाः अपरीक्षितभोक्तारोव्याघ्रास्स्युर्निर्जनेवने १७ गायत्रींनस्मरेद्यस्तुयोनसंध्यामुपासते अं-
तर्दुष्टोबहिःसाधुःसभवेद्ब्राह्मणोबकः १८ हान् १५ १६ विश्वंसर्वजातीयंप्राणिजातंदेवादेवतायस्मिन् तद्विश्वदेवंस्वार्थे

तद्धितः वैश्वदेवंनामकर्मतदकर्त्तारः सर्वेषांकुलालरजकादीनामप्यन्नंभक्षयंतितेसर्वभक्षाः गणान्नंगणिकान्नंचभुक्त्वाचांद्रायणंचरेदि-
तिनिषेधात् सर्वभक्ष्यमपिभक्षयंतीतिवा अथुचिहेयोपादेयपरीक्षामकृत्वायेभुंजंततेपि १७ १८ ७ ७.

२८ अप्राप्तयौवना अजातरजस्कातस्याः संगात् २९ ३० वृषलीव्याख्याता ३१ ऐकादशाहम् आएकादशाहमितिच्छेदः एकाद-



यस्त्वगोत्रोपघातीचस्वगोत्रस्त्रीनिषेवणात् तरक्षुःशल्लकोभूत्वाऋक्षयोनिषुजायते २८ तापसीगमनात्कामीभवे-
न्मरुपिशाचकः अप्राप्तयौवनासंगाद्भवेदजगरोवने २९ गुरुदाराभिलाषीचकृकलासोभवेन्नरः राज्ञींगत्वाभवे
द्दुष्टोमित्रपत्नींचगर्दभः ३० गुदगोविड्वराहःस्याद्वृषःस्याद्वृषलीपतिः महाकामीभवेद्यस्तुस्यादश्वःकामलंपटः ३१ मृ-
तस्यैकादशाहंतुभुंजानःश्वाभिजायते लभेद्देवलकोविप्रोयोनिंकुक्कुटसंज्ञकाम् ३२ द्रव्यार्थंदेवतापूजांयःक-
रोतिद्विजाधमः सवैदेवलकोनामहव्यकव्येषुगर्हितः ३३ महापातकजान्घोरान्नरकान्प्राप्यदारुणान् कर्मक्ष-
येप्रजायंतेमहापातकिनस्त्विह ३४ खरोष्ट्रमहिषाणांहिब्रह्महायोनिमृच्छति वृकश्वानसृगालानांसुरापायांतियो-
निषु ३५ कृमिकीटपतंगत्वंस्वर्णस्तेयीसमाप्नुयात् तृणगुल्मलतात्वंचक्रमशोगुरुतल्पगः ३६ परस्ययोषितंहृत्वा-
न्यासापहरणेनच ब्रह्मस्वहरणाच्चैवजायतेब्रह्मराक्षसः ३७

दशाहपर्यंतंसूतकान्नमित्यर्थः ३२ देवलकमाह हव्यकव्येषुगर्हि- ३५
तः पितृदेवकार्येषुभोजयितुमनर्हः ३३ महापापिनांयोनिमाहत्रिभिः ३४ ३५ ३६ न्यासस्यस्वगृहेधृतस्यपरधनस्यापहरणेनग्रहणेन-
३७

प्रसंगाद्ब्रह्मस्वहरणेदोषमाह ब्रह्मस्वमिति त्रिभिः प्रणयात्स्नेहात् भुक्तंभक्षितम् ब्रह्मस्वंब्राह्मणधनं आसप्तमं सप्तमपुरुषपर्यंतंकुलं दहति चौर्यादिभिः महदनर्थंकरोति बलात्भुक्तंसदाचंद्रतारापर्यंतंभाविकुलंदहति वंशच्छेदंकरोतीत्यर्थः ३८ कःनकोपीत्यर्थः ३९ विशीर्यंते

ब्रह्मस्वंप्रणयाद्भुक्तंदहत्यासप्तमंकुलम् बलात्कारेणचौर्येणदहत्याचंद्रतारकम् ३८ लोहचूर्णाश्मचूर्णेचविषंचजरयेन्नरः ब्रह्मस्वंत्रिषुलोकेषुकःपुमान्जरयिष्यति ३९ ब्रह्मस्वरसपुष्टानिवाहनानिबलानिच युद्धकालेविशीर्यंतेसैकतासेतवोयथा ४० देवद्रव्योपभोगेनब्रह्मस्वहरणेनच कुलान्यकुलतांयांतिब्राह्मणातिक्रमेणच ४१ स्वमाश्रितंपरित्यज्यवेदशास्त्रपरायणम् अन्येभ्योदीयतेदानंकथ्यतेयमतिक्रमः ४२ ब्राह्मणातिक्रमोनास्तिविप्रेवेदविवर्जिते ज्वलंतमग्निमुत्सृज्यनहिभस्मनिहूयते ४३ अतिक्रमेकृतेतास्तुभुक्त्वाचनरकान्क्रमात् जन्मांधःसन्दरिद्रःस्यान्नदाताकिंतुयाचकः ४४

ते पलायंते ४० अकुलतामुच्छेदताम् ४१ अतिक्रमंव्याख्यायते स्वमिति ४२ विप्रेस्वमाश्रितेवेदवर्जिते कुपात्रेसति अतिक्रमदोषोनास्तीत्यर्थः ज्वलंतंदूरेदीप्यमानंभस्मनिनिकटवर्तिनियथादूरादाहृत्य अभावेवहवनमुचितंतथानिकटवर्तिनंमूढंपरित्यज्य विदेशाद्दानीयपात्रेप्रदेयमितिभावः ४३ पात्रंपरित्यज्यकुपात्रदानस्यफलमाह भतीति ४४

पापुत्री ४५ अपकर्षति हरति ४६ ४७ ४८ ४९ ७५सहस्राणि एवमिति ५० तिर्यक् शरीरत्वं पशुपक्षिदेहप्रावम् भारवाहनेनउ

३६ स्वदत्तांपरदत्तांवायोहरेच्चवसुंधराम् षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिः ४५ स्वयमेवन्चयोदत्त्वास्वयमे-
वापकर्षति सपापीनरकंयातियावदाभूतसंप्लवम् ४६ दत्वावृत्तिंभूमिदानंयत्नतःपरिपालयेत् नरक्षतिहरे-
द्यस्तुसपंगुःश्वाभिजायते ४७ विप्रस्यवृत्तिकरणेलक्षधेनुफलंभवेत् विप्रस्यवृत्तिहरणान्मर्कटःश्वाकपिर्भवे-
त् ४८ एवमादीनिचिन्हानियोनयश्चखगेश्वर स्वकर्मविहितालोकेदृश्यंतेऽत्रशरीरिणाम् ४९ एवंदुष्कर्मक
र्तारोभुक्त्वानिरययातनाम् जायंतेपापशेषेणप्रोक्तास्वेतासुयोनिषु ५० ततोजन्मसहस्रेषुप्राप्यतिर्यक्शरी-
रताम् दुःखानिभारवहनोद्भवादीनिलभंतिते ५१ पक्षिदुःखंततोभुक्त्वावृष्टिशीतातपोद्भवम् मानुषंलभते-
पश्चात्समीभूतेशुभाशुभे ५२ स्त्रीपुंसोस्तुप्रसंगेनभूत्वागर्भेक्रमादसौ गर्भादिमरणांतंचप्राप्यदुःखंम्रिये-
तपुनः ५३ समुत्पत्तिर्विनाशश्चजायतेसर्वदेहिनाम् एवंप्रवर्तितंचक्रंभूतग्रामेचतुर्विधे ५४ २६

द्भवोयेषां तानिपशुदेहेलभंते ५१ वृष्ट्यादिभवंदुःखंपक्षिदेहेइति ५२ ५३ ५४ ५ ६ १

५५ ५६ ५७ इतिटीकायांपंचमोऽध्यायः ५ पातकीनरकंगत्वाजायतेनिर्धनेकुले इतिश्रुत्वातुगरुडस्तज्जन्मपरिपृच्छति १ प्रोक्तमामुष्मिकंदुःखंयेषामध्यायपंचकेः तेषांषष्ठेऽधुनाप्राहजन्मकर्मचकेशवः २ कथमिति १ प्रसंगेनसंगमेननिरुद्धेगर्भएवस्थिते

घटीयंत्रंयथामर्त्याभ्रमंतिममभायया भूमौकदाचिन्नरकेकर्मपाशसमावृताः ५५ अदत्तदानाच्चभवेद्दरिद्रोदरिद्रभावाच्चकरोतिपापम् पापप्रभावान्नरकंप्रयातिपुनर्दरिद्रीपुनरेवपापी ५६ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभम् नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपि ५७ इतिश्रीगरुडपुराणेसारोद्धारेपापचिन्हनिरूपणोनामपंचमोऽध्यायः ५ गरुडउवाच कथमुत्पद्यतेमातुर्जठरेनरकागतः गर्भादिदुःखंयद्भुंक्तेतन्मेकथयकेशव १ श्रीभगवानुवाच स्त्रीपुंसोस्तुप्रसंगेननिरुद्धेशुक्रशोणिते यथायंजायतेमर्त्यस्तथावक्ष्याम्यहंतव २ ऋतुमध्येहिपापानांदेहोत्पत्तिःप्रजायते इंद्रस्यब्रह्महत्यास्तियस्मिन्तस्मिन्दिनत्रये ३ प्रथमेऽहनिचांडालीद्वितीयेब्रह्मघातिनी तृतीयेरजकीत्येतानरकागतमातरः ४

सति २ यस्मिन्ऋतुमध्येहत्याचतुर्थांशेनस्ति तस्मिन्नेवदिनत्रयेपापिनांदेहोत्पत्तिरित्यन्वयः ३ ब्रह्मघातिनीमहापातकयुक्तेवास्पर्शाएतास्त्रिमलिनदिनांतर्गताश्चांडाल्यादिसमाहिनरकेभ्यआगतानांमातरोभवंति एतास्वेवनरकागताउत्पद्यंतइत्यर्थः ४

दैवंईश्वरस्तु दैवनेतृप्रवर्त्तकंयस्यतद्दैवनेत्रंतेनपूर्वकृतेनकर्मणाजंतुर्जीवः देहस्यप्राप्तये पुंसः पुरुषस्यरेतसः शुक्रस्यकणोबिंदुस्तस्याश्रयः सन्स्त्रियाउदरंप्रविष्टोभवति अत्रायंविशेषः शुक्रशोणितसंयोगात्पिंडोत्पत्तिःप्रजायते रक्ताऽधिक्येभवेन्नारीशुक्राधिक्येभवेत्पुमान् समानेद्रव्यसंयोगेतृतीयाप्रकृतिर्भवेत् १ विभक्तेरेतसिप्रायोभवेद्युग्ममपिक्वचिदिति ५ भूत्वागर्भेक्रमादिति पूर्वसूचितकर्मणो-



कर्मणादैवनेत्रेणजंतुर्देहोपपत्तये स्त्रियाःप्रविष्टउदरंपुंसोरेतःकणाश्रयः ५ कलिलंत्वेकरात्रेणपंचरात्रेणबुद्बु-
दम् दशाहेनतुकर्कंधूःपेश्यंडंवाततःपरम् ६ मासेनतुशिरोद्वाभ्यांबाह्वंगाद्यंगविग्रहः नखलोमास्थिचर्माणि
लिंगच्छिद्रोद्भवस्त्रिभिः ७ चतुर्भिर्धातवःसप्तपंचभिःक्षुत्तृडुद्भवः षड्भिर्जरायुणावीतःकुक्षौभ्राम्यतिदक्षि-
णे ८

वगर्भोत्पत्तिप्रकारमाह कलिलमितिचतुर्भिः कलिलंशुक्रशोणितमिश्रितंभवतिततोबुद्बुदंवर्त्तुलंभवति पेशीमांसपिंडाकारंभवति कर्कंधूःबदरीफलंकाठिनंभवति अंडंवायोन्यंतरे ६ बाह्वंगाद्यंगानांविग्रहोविभागः लिंगच्छिद्राणिचतेषामुद्भवः ७ जरायुणागर्भवेष्टनेनवीतःप्रवृत्तः ८

मातुर्जग्धेन भक्षिते नान्नेन पानाद्येश्च एधमाना धातवो यस्य जंतूनां संभवो यस्मिन्तस्मिन् संभृते दुर्गंधे गर्ते शेते तथा च मार्कंडेयपुराणे नाडी चाप्यायनीनाम नाभ्यां तस्य निबध्यते स्त्रीणां तथांत्रकषिरे सानिबद्धोपजायते क्रमंते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा नैराप्यायित देहोऽसौ जंतुर्वृद्धिमुपैति वा इति ९ कथमुत्पद्यंत इति प्रश्नोत्तरमुक्त्वा गर्भादिदुःखं यदुक्तं एतस्योत्तरमाह तत्रत्यैर्गर्भस्थितैः क्षुधि-

मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंभृते शेते विण्मूत्रयोर्गर्ते स जंतुर्जंतुसंभवे ९ कृमिभिः क्षतसर्वांगः सौकुमार्यात्प्रतिक्षणम् मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः १० कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः मातृभुक्तैरुपस्पृष्टः सर्वांगोत्थितवेदनः ११ उल्बेन संवृतस्तस्मिन्नंत्रैश्च बहिरावृतः आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः अकल्पः स्वांगचेष्टायां शकुंत इव पंजरे १२ तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विंदते १३

तैः स्वादद्भिः कृमिभिः सौकुमार्यात् कोमलत्वेन क्षतानि सर्वांगानि यस्य १० उल्बणैः दुःसहैः सर्वांगेषु उत्थिता वेदना यस्य आस्ते इत्युत्तरेणान्वयः ११ उल्बेन जरायुणा भुग्नं वक्रं पृष्ठं शिरोधरा ग्रीवा च यस्य १२ दैवात्पूर्वकर्मवशाल्लब्धा स्मृतिर्येन स दीर्घं दुरंतं अनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् सुखं नैव विंदते इति १३ ७ ७

नाथमानोयाचमानः उपतप्यमानोवाऋषिर्देहात्मदर्शीसप्तवध्रयोबंधनभूताधातवोयस्यसः १४ सूतिहेतुभिर्वातैर्वेपितः सोदरः
समानोदरजन्माविष्ठाभूःकृमिरिव १५ अत्रातिदुःखितोजीवोमंदविरक्तइवस्तौति निर्विद्यश्रीपतिमित्याद्यष्टभिः १६ १७

नाथमानऋषिर्भीतःसप्तवध्रिःकृतांजलिः स्तुवीततंविक्लवयावाचायेनोदरेर्पितः १४ आरभ्यसप्तमान्मासा-
ल्लब्धबोधोपिवेपितः नैकत्रास्तेसूतिवातैर्विष्ठाभूरिवसोदरः १५ जीवउवाच श्रीपतिंजगदाधारमशुभक्ष-
यकारकम् व्रजामिशरणंविष्णुंशरणागतवत्सलम् १६ त्वन्मायामोहितोदेहेतथापुत्रकलत्रके अहंममा-
भिमानेनगतोऽहंनाथसंसृतिम् १७ कृतंपरिजनस्यार्थेमयाकर्मशुभाशुभम् एकाकीतेनदग्धोऽहंगता
स्तेफलभागिनः १८ यदियोन्याःप्रमुच्येऽहंतत्स्मरिष्येपदंतव तमुपायंकरिष्यामियेनमुक्तिंव्रजाम्यहम्
१९ विण्मूत्रकूपेपतितोदग्धोऽहंजठराग्निना इच्छन्नितोविवसितुंकदानिर्यास्यतेबहिः २० येनेदृशंमे
विज्ञानंदत्तंदीनदयालुना तमेवशरणंयामिपुनर्मेमाऽस्तुसंसृतिः २१

परिजनस्यार्थेकुटुंबपालनाय १८ १९ स्वदुः
खंविज्ञापयन्नाह इतिगर्भाद्विवसितुंनिर्गंतुमिच्छन् असौकदाबहिर्निर्यास्यतेनिष्काश्यते २० तत्कृतमुपकारंस्मरन्नाह येनेति २१

[illegible] २२ तस्मादत्रैवस्थितोपिविगतक्लमः अव्याकुलःसन् कान्तत्वसाधनसामग्रीतत्राह तेपदाश्रयः सन्निति २३ दशमास्यःदशमासाः
[illegible]तीताय स्येति [illegible]जीवः सद्यस्तत्क्षणमेव अवाचीनं अधोमुखंसूतिहेतुर्मारुतः प्रसूत्यैजन्मार्थंक्षिपतिनुदति २५ [illegible]

नचनिर्गंतुमिच्छामिबहिर्गर्भात्कदाचन यत्रयातस्यमेपापकर्मणादुर्गतिर्भवेत् २२ तस्मादत्रमहद्दुःखेस्थितोपिवि-
गतक्लमः उद्धरिष्यामिसंसारादात्मानंतेपदाश्रयः २३ श्रीभगवानुवाच एवंकृतमतिर्गर्भेदशमास्यस्तुवन्नृषिः
सद्यःक्षिपत्यवाचीनंप्रसूत्यैसूतिमारुतः २४ तेनावसृष्टःसहसाकृत्वावाक्शिरआतुरः विनिष्क्रामतिकृच्छ्रेणनिरु
च्छ्वासोहृतस्मृतिः २५ पतितोभुविविण्मूत्रेविष्ठाभूरिवचेष्टते रोरूयतिगतेज्ञानेविपरीतांगतिंगतः २६ गर्भेव्याधौ-
श्मशानेचपुराणेयामतिर्भवेत् सायदिस्थिरतांयातिकोनमुच्येतबंधनात् २७ यदागर्भाद्बहिर्यातिकर्मभोगादनंतरम्
तदेववैष्णवीमायामोहयत्येवपूरुषम् २८ सतदामाययास्पृष्टोनकिंचिद्वदतेवशः शैशवादिभवंदुःखंपराधीनतया-
भुंक्ते २९

[illegible] २५ २६ श्मशानेमृतानुगमनेपुराणेतत्श्रवणे २७ किमितिस्थिरतांनयातिइत्यत्राह यदेति २८ २९ ७

गन्युन्टी · गर्भदुःखमुक्त्वाशैशवदुःखमाह परेतित्रिभिः परस्यछंदंमनोगतमभिप्रायं अविदुषाजनेनपुष्यमाणः पाल्यमानः अनभिप्रेतंप्रतिकूलं आ अ·
२९ पन्नः प्राप्तः सन् स्तन्यार्थेरोदनेंउदरव्यथांप्रकल्प्यनिंबरसपानंउदरव्यथयारोदनेस्तनपानमित्यादि ३० आसनोत्थानचेष्टनेच अनीशः स ६

परछंदंनविदुषापुष्यमाणोजनेनसः अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ३० शायितोऽशुचिपर्यंकेजंतुःस्वेदजदू-
षिते नेशःकंडूयनेंगानामासनोत्थानचेष्टने ३१ तुदंत्यामत्वचंदंशामशकामत्कुणादयः रुदंतंविगतज्ञानंकृमयः
कृमिकंयथा ३२ इत्येवंशैशवंभुक्त्वादुःखंपौगंडमेवच ततोयौवनमासाद्ययातिसंपदमासुरीम् ३३ तदादु-
र्व्यसनासक्तोनीचसंगपरायणः शास्त्रसत्पुरुषाणांचद्वेष्टास्यात्कामलंपटः ३४ दृष्ट्वास्त्रियंदेवमायांतद्भावैर-
जितेंद्रियः प्रलोभितःपतत्यंधेतमस्यग्नौपतंगवत् ३५

न रोरूयतीत्यनुषंगः ३१ आमाकोमलात्वक् यस्यतंगर्भेजातंज्ञानंयस्य ३२ शैशवंपंचवर्षाणि पौगंडंयौवनादर्वाक् तत्रचाध्ययनादि-
दुःखानियौवनदुःखमाह आसुरींदंभोदर्पोभिमानश्चेत्यादि ३३ तदायौवनसमये ३४ कामलंपटतामेवाह दृष्ट्वेति देवस्यममामायारू २९
पांतद्भावैस्तस्याःकटाक्षकपटस्नेहवंचनादिभिर्भावैःप्रलोभितः सन्नंधेतमसिमहामोहेपतति ३५

अत्र पंचेंद्रियप्रधानोनरः पवतीतिकिंवाच्यं एकैकेंद्रियासक्त्यैवबहवोनष्टाइत्याह कुरंगेतिपंचभिः शब्दस्पर्शरूपरसगंधैर्मोहिताः कुरंगादयः पं-
चहताएव किंच पंचभिः श्रवणादिभिरिंद्रियैः पंचशब्दादिविषयान् यःएकएव प्रमादी अविवेकीसेवते सयुवाकथंनहन्यते अपितुहन्यतएवे
त्यर्थः ३६ हननमेवनिरूपयति अलब्धइतिद्वाभ्याम् नलब्धंअभीप्सितंवांछितंकामिन्यादिसुरवंयेनसः अज्ञानादविचारात् इद्धः प्रवृद्धो

कुरंगमातंगपतंगभृंगमीनाहताःपंचभिरेवपंच एकः प्रमादीसकथंनहन्यतेयःसेवतेपंचभिरेवपंच ३६ अल-
ब्धाभीप्सितोज्ञानादिद्धमन्युःशुचार्पितः सहदेहेनमानेनवर्द्धमानेनमन्युना ३७ करोतिविग्रहंकामीकामिष्वंताय
चात्मनः बलाधिकैःसहन्येतगजैरन्यैर्गजोयथा ३८ एवंयोविषयासक्त्यानरत्वमतिदुर्लभम् वृथानाशयतेमू
ढस्तस्मात्पापतरोहिकः ३९

मन्युः कोपोयस्येति यदावांछितलोभोनजातः तदाशुचार्पितः शोकेनयुक्तोभवति यदा
देहेनसहैववर्धमानेनमन्युनाच ३७ आत्मनोहितायस्वस्यनाशायकामिषु अन्यजारेषुकामिनीनिमित्तंविग्रहंविरोधंकरोति तदाकामीयुवाब-
लाधिकैर्जारैर्हन्येत यथाप्रबलैर्गजैर्हीनोगजइव ३८ योविषयासक्त्यायैवनरत्वंनाशयति तमनुशोचन्नाह एवमितिद्वाभ्याम् ३९

जातीशतेष्विति पश्वादिजातीनां शतेषु शतशब्दोत्र आनंत्यवाचकः अनेकजीवजातिष्वित्यर्थः भुवि कर्मभूमौ च मानुषत्वं यन्मनुष्यशरीरं लभ्य
ते तद्दुर्लभं हि भगवन्नामस्मरणार्हत्वात् अहोबत श्वपचोतो गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यमिति वचनात् तत्रापि नरदेहेपि द्विजत्वं ब्रा
ह्मणत्वं दुर्लभतरं अतिदुर्लभं खलु अतो भोगरूढ यो द्विजस्तत्र तारुण्ये पालयति देहमिति शेषः इंद्रियाणि लालयति विषयास्वादने लंपटानि
करोति तस्य द्विजस्य हस्तगतं अनायासेन करतलेप्राप्तं पानेन अजरामरत्वप्रदमप्यमृतं प्रमादात् पानस्यालस्यात् क्षरति वृथैव निःसरति

जातीशतेषु लभते भुवि मानुषत्वं तत्रापि दुर्लभतरं खलु भो द्विजत्वम् यस्तन्न पालयति लालयतींद्रियाणि तस्यामृतं क्ष
रति हस्तगतं प्रमादात् ४० ततस्तां वृद्धतां प्राप्य महाव्याधिसमाकुलः मृत्युं प्राप्य महद्दुःखं नरकं याति पूर्ववत् ४१
एवं गतागतैः कर्मपाशैर्बद्धाश्च पापिनः कदापि न विरज्यंते मम मायाविमोहिताः ४२

पतति तथा तपस्तीर्थादिषु समर्थं मुक्तिप्रदं तारुण्यं क्षुद्रविषयाभिलाषेण वृथैव यातीत्यर्थः ४० ततस्तारुण्यानंतरं तां आस्तेव मत्यो
प्यस्ति मित्यादिना पूर्वोक्तां वृद्धतां प्राप्य पूर्ववत् यातनादेह आवृत्येत्यादि पूर्वोक्तप्रकारेण ४१ एवं षडध्यायोक्तप्रकारेण गतागतैः गतान
लोकागतागतमेतद्रूपैः कर्मपाशैर्बद्धा न विरज्यंते विरक्तिं न लभंते अत्र हेतुर्ममभायाविमोहिता इति ४२

इतितेकथितातार्क्ष्यपापिनांनारकीगतिः अंत्यष्टीकर्महीनानांकिंभूयःश्रोतुमिच्छसि ४३ इतिश्रीगरुडपुराणेसारोद्धा-
रेपापिजन्मादिदुःखनिरूपणोनामषष्ठोऽध्यायः ६ सूतउवाच इतिश्रुत्वातुगरुडःकंपितोऽश्वत्थपत्रवत्
जनानामुपकारार्थंपुनःपप्रच्छकेशवम् १ गरुडउवाच कृत्वापापानिमनुजाःप्रमादाद्बुद्धितोपिवा
नयांतियातनायाम्याःकेनोपायेनकथ्यताम् २ संसारार्णवमग्नानांनराणांदीनचेतसाम् पापोपहतबुद्धीना-
विषयोपहतात्मनाम् ३ उद्धारार्थंवदस्वामिन्पुराणार्थविनिश्चयम् उपायंयेनमनुजाःसद्गतिंयांतिमाध-
व ४ श्रीभगवानुवाच साधुपृष्टंत्वयातार्क्ष्यमानुषाणांहितायवै शृणुष्वावहितोभूत्वासर्वंतेकथयाम्यह-
म् ५ दुर्गतिःकथितापूर्वमपुत्राणांचपापिनाम् पुत्रिणांधार्मिकाणांतुनकदाचित्खगेश्वर ६

तंत्र अपुत्राणामेवदुर्गतिर्भवतिनतुपुत्रिणां अतः पुत्रमहिमानंनिरूपयति ७ उपायमेवाह हरिवंशेति ८ ९ १० ११ लोकान् यमलोकादीन् - पुत्र प्रा

अप्येत् अतिक्रमति पुत्रादिभिः कृत्वादिवः स्वर्गस्यप्राप्तिर्भवति १२ अत्रविशेषमाह ब्राह्म्योदेति ब्राह्म्यविवाहेनऊढाविवाहितायाप- ४१

पुत्रजन्मावरोधः स्याद्यदिकेनापिकर्मणा तदाकश्चिदुपायेनपुत्रोत्पत्तिंप्रसाधयेत् ७ हरिवंशकथांश्रुत्वाश-
तचंडीविधानतः भक्त्याश्रीशिवमाराध्यपुत्रमुत्पादयेत्सुधीः ८ पुन्नाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः त-
स्मात्पुत्रइतिप्रोक्तः स्वयमेवस्वयंभुवा ९ एकोपिपुत्रोधर्मात्मासर्वंतारयतेकुलम् पुत्रेणलोकान्जयतिश्रु-
तिरेषासनातनी १० इतिवेदैरपिप्रोक्तंपुत्रमाहात्म्यमुत्तमम् तस्मात्पुत्रमुखंदृष्ट्वामुच्यतेपैतृकादृणात् ११
पौत्रस्यस्पर्शनान्मर्त्योमुच्यतेचऋणत्रयात् लोकानत्येदिवःप्राप्तिः पुत्रपौत्रप्रपौत्रकैः १२ ब्राह्म्योढापुत्रोन्नयतिसं-
गृहीतस्त्वधोनयेत् एवंज्ञात्वा [illegible] हीनजातिसुतांस्त्यजेत् १३

नीतस्याः पुत्रोब्राह्म्योढापुत्रः सतुउत ऊर्ध्वंस्वर्गादिलोकंनयति उन्नयतिइत्यत्रसंधिरार्षः ब्राह्म्यंतुसवर्णायासवर्णेनवरेणसहजायते
[illegible] इत्यभिधीयते इतिसंगृहीतं अविवाहितायापुत्रस्तु अधः अधोगतिंनयति १३ ५ २ १

सवर्णेभ्यः सवर्णासु स्त्रीषु औरसा इति दत्तक्रीतादिव्यावृत्तिः स्वरित्यव्ययं स्वर्यातीति किं वाच्यं परदत्तेन श्राद्धेन स्व

सवर्णेभ्यः सवर्णासु ये पुत्रा औरसाः स्वकाः न एव श्राद्धदानेन पितॄणां स्वर्गहेतवः १४ श्राद्धेन पुत्रदत्तेन स्वर्यातीति किमु
च्यते प्रेतोपि परदत्तेन गतः स्वर्गमयाम्पृणु १५ अत्रैवोदाहरिष्येहमितिहासं पुरातनम् और्ध्वदैहिकदानस्य परं मा
हात्म्यसूचकम् १६ पुरा त्रेतायुगे तार्क्ष्य राजासीद्बभ्रुवाहनः महोदये पुरे रम्ये धर्मनिष्ठो महाबलः १७ यज्वा दानप
तिः श्रीमान्ब्रह्मण्यः साधुवत्सलः शीलाचारगुणोपेतो दयादाक्षिण्यसंयुतः १८ पालयामास धर्मेण प्रजाः पुत्रानिवौरसा
न् क्षत्रधर्मरतो नित्यं स दंड्यान्दंडयन्नृपः १९ स कदाचिन्महाबाहुःससैन्यो मृगयां गतः वनं विवेश गहनं नानावृक्ष
समन्वितम् २० नानामृगगणाकीर्णं नानापक्षिनिनादितम् वनमध्ये तदा राजा मृगं दूरादपश्यत २१ तेन विद्धो मृ
गो तीव बाणेन सुदृढेन च बाणमादाय तं तस्य वने दर्शनमेयिवान् २२

नृपंग: १५ अत्र पुत्रमाहात्म्यप्रस्तावेन श्राद्धमहिमानमितिहासमुखेन प्रस्तौति अत्रेति यावदध्यायसमाप्ति १६ १७ १८ १९ २०
२१ तेन नृपेण दूरात्क्षिप्तेन अतीव सुदृढेनापि बाणेन विद्ध एव न तु मृतः एयिवान् गतः २२ ७ ७

२२ क्षुत्तृड्भ्यांक्षामः शुष्कः कंठोयस्य दूरगमनेनश्रमः स्वेदआतपेनसंतापस्ताभ्यांमूर्च्छितअस्वस्थः सरोवरंप्राप्य अश्वेनसहितएव-



कक्षेणरुधिसद्रेणसराजानुजगामतम् ततोमृगप्रसंगेनवनमन्यद्विवेशसः २३ क्षुत्क्षामकंठोनृपतिःश्रमसंतापमू-
र्च्छितः जलाशयंसमासाद्यसाश्वएवव्यगाहत २४ पपौतदुदकंशीतंपद्मगंधाधिवासितम् ततोवतीर्यसलिलाद्वि-
श्रमोबभ्रुवाहनः २५ ददर्शन्यग्रोधतरुंशीतच्छायंमनोहरम् महाविटपविस्तीर्णपक्षिसंघनिनादितम् २६
वनस्यतस्यसर्वस्यमहाकेतुमिवस्थितम् मूलंतस्यसमासाद्यनिषसादमहीपतिः २७ अथप्रेतंददर्शासौक्षुत्तृ-
षाव्याकुलेंद्रियम् उत्कचंमलिनंकुब्जंनिर्मांसंभीमदर्शनम् २८ तंदृष्ट्वाविकृतंघोरंविस्मितोबभ्रुवाहनः प्रेतोपिद्द-
ष्ट्वातंघोरामटवीमागतंनृपम् २९ समुत्कककमनाभूत्वातस्यांतिकमुपागतः अब्रवीत्सतदाताक्ष्र्यप्रेतराजोनृपंव-
चः ३०

व्यगाहत तस्मिन्प्रविष्टः २४ ततअश्वादवतीर्यतदुदकंपपौसलिलाज्जलपानाद्विश्रमः विगतश्रमोबभूव २५ २६
न्यग्रोधतरुंवटवृक्षंमहाकेतुंउच्चतरत्वाद्वनध्वजमिव २७ २८ २९ समुत्कककमनाःप्रसन्नचित्तः ३०

३१ ३२ ३३ ३४ नानाजनपदाकीर्णं अनेकदेशोद्भवैर्जनैः परिपूर्णं नानारत्नैश्चजातौजातौयदुत्कृष्टंतद्रत्नमभिधीयते इतिस्त्रीगजाश्वादिश्रे

प्रेतभावोमयात्यक्तःप्राप्तोस्मिपरमांगतिम् त्वत्संयोगान्महाबाहोजातोधन्यतरोस्म्यहम् ३१ राजोवाच कृष्णव
र्णकरालस्यप्रेतत्वंघोरदर्शनम् केनकर्मविपाकेनप्राप्तंतेबहुमंगलम् ३२ प्रेतत्वकारणंतातब्रूहिसर्वमशे-
षतः कोसित्वंकेनदानेनप्रेतत्वंतेविनश्यति ३३ प्रेतउवाच कथयामिनृपश्रेष्ठसर्वमेवादितस्तव प्रेतत्वका-
रणंश्रुत्वादयांकर्तुंत्वमर्हसि ३४ वैदर्शंनामनगरंसर्वसंपत्समन्वितम् नानाजनपदाकीर्णंनानारत्नसमाकुलम्
३५ हर्म्यप्रासादशोभाढ्यंनानाधर्मसमन्वितम् तत्राहंन्यवसंतातदेवार्चनरतःसदा ३६ वैश्योजात्यास्मिदेवोहं
नाम्नाविदितमस्तुते हव्येनतर्पितादेवाःकव्येनपितरस्तथा ३७ विविधैर्दानयोगैश्चविप्राःसंतर्पितामया दीनांध-
कृपणेभ्यश्चदत्तमन्नमनेकधा ३८

ष्ठवस्तुभिःपूर्णम् ३५ हर्म्यंराजगृहंप्रोक्तंप्रासादोधनिनांगृहंतेषांशोभाभिराढ्यंयुक्तंनानाध-
र्मैः श्रौतस्मार्तैः ३६ कोसित्वमितिप्रश्नस्योत्तरमाह वैश्यइति देवार्थमन्नंहव्यंस्यात्पित्रर्थंकव्यमेवच ३७ ३८ ७ ७

३९ ननुसुकृतंकथंनिष्फलंजातमहोइत्याशंकायामाह ममेति ४० किंच अपुत्रस्यममैवप्रेतत्वजातमिति नकिंतु षोडशश्राद्धरहितस्यस
पुत्रस्यापिस्यादित्याह यस्येति ४१ विपदिरक्षकत्वाद्बंधुरितिहेतोः पुत्राद्यभावेराजापिक्रियांकारयेदितिभावः तदुक्तंविष्णुपुराणेऽच्छिन्नबंधु

तत्सर्वंनिष्फलंराजन्ममदैवादुपागतम् यथामेनिष्फलंजातंसुकृतंतद्वदामिते ३९ ममवैसंततिर्नास्तिनसुहृन्नच
बांधवः नचमित्रंहिमेतादृक्यःकुर्यादौर्ध्वदेहिकम् ४० यस्यनस्यान्महाराजश्राद्धंमासिकषोडशम् प्रेतत्वंसु-
स्थिरंतस्यदत्तैःश्राद्धशतैरपि ४१ त्वमौर्ध्वदैहिकंकृत्वामामुद्धरमहीपते वर्णानांचैवसर्वेषांराजाबंधुरिहोच्य-
ते ४२ तन्मांतारयराजेंद्रमणिरत्नंददामिते यथामेसद्गतिर्भूयात्प्रेतयोनिश्चगच्छति ४३ तथाकार्यंत्वयावीर
ममचेदिच्छसिप्रियम् क्षुधातृषादिभिर्दुःखैःप्रेतत्वंदुःसहंमम ४४ स्वादूदकंफलंचास्तिवनेस्मिन्शीतलंशिवम् नप्राप्नो
मिक्षुधार्त्तोहंतृषार्त्तोनजलंक्वचित् ४५ यदिमेहिभवेद्राजन्विधिर्नारायणोमहान् तदग्रेवेदमंत्रैश्चक्रियासर्वौर्ध्वदे-
हिकी ४६

ज्ञातीनांकारयेदवनीपतिरिति ४२ पूर्वसुकृतप्रभावान्मणिरत्नलाभः ४३ ४४ सर्वयोनिषुआहारसुखेनदुःखसाहि
ष्णुताभवति ममतुतदलाभाद्दुःखंदुःसहमेवेत्याह स्वादिति ४५ केनदानेनतेप्रेतत्वंविनश्यति इतिप्रश्नोत्तरमाह पंचभिः यदीति ४६

४७ सच्छास्त्रश्रवणेनधुंधुकारीविमुक्तः सज्जनानांधर्मदत्तादीनांसंगाद्वहकः कलहादयोविमुक्ताइति ४८ किंच ममप्रेतत्वंतुविष्णुपूजयैवया
स्यति अतस्तांवक्ष्यामीतिसुवर्णद्वयमिति पंचगुंजोमाषःसुवर्णषोडशमाषसंख्याकंतस्यद्वयंद्वात्रिंशन्माषकंसुवर्णकांचनंतस्यप्रतिमांप्रकल्प

तदानश्यतिमेनूनंप्रेतत्वंनात्रसंशयः वेदामंत्रास्तपोदानंदयांसर्वत्रजंतुषु ४७ सच्छास्त्रश्रवणंविष्णोःपूजासज्जनसंग-
तिः प्रेतयोनिविनाशायभवंतीतिमयाश्रुतम् ४८ अतोवक्ष्यामितेविष्णुपूजांप्रेतत्वनाशिनीम् सुवर्णद्वयमानीयसुवर्णं
न्यायसंचितम् तस्यनारायणस्यैकांप्रतिमांभूपकल्पयेत् ४९ पीतवस्त्रयुगच्छन्नांसर्वाभरणभूषिताम् स्नापितांवि
विधैस्तोयैरधिवास्ययजेत्ततः ५० पूर्वेतुश्रीधरंतस्यादक्षिणेमधुसूदनम् पश्चिमेवामनंदेवमुत्तरेचगदाधरम् ५१
मध्येपितामहंचैवतथादेवंमहेश्वरम् पूजयेच्चविधानेनगंधपुष्पादिभिःपृथक् ५२ ततःप्रदक्षिणीकृत्यवन्हौसंतर्प्य
देवताः घृतेनदध्नाक्षीरेणविश्वेदेवांश्चतर्पयेत् ५३ ततःस्नातोविनीतात्मायजमानःसमाहितः नारायणाग्रेविधिव-
त्स्वांक्रियामौर्ध्वदैहिकीम् ५४

येत् ४९ विविधैरनेकतीर्थोद्भवैः अलाभेवापीकूपजलैर्वा अधिवास्य सिंहासनेस्थाप्यपूज
येत् ५० पूजनप्रकारमाह पूर्वेस्यादिपंचभिः ५१ ५२ ५३ ५४ ७ ७ ७

५५ निर्वपेत् प्रेतघटंदद्यात् ५६ ५७ स्फ्रद्टेनसक्तुमयोग्येन अवश्यंकर्तव्येनेत्यर्थः ५८ ५९ तदेवाह संतमहाटकमयंशोधितं



आरभेतयथाशास्त्रंक्रोधलोभविवर्जितः कुर्यात्श्राद्धानिसर्वाणिवृषस्योत्सर्जनंतथा ५५ ततःपदानिविप्रेभ्योदद्याच्चै वत्रयोदश शय्यादानंप्रदत्वाचघटंप्रेतस्यनिर्वपेत् ५६ राजोवाच कथंप्रेतघटंकुर्याद्दद्यात्केनविधानतः ब्रूहिसर्वानुकंपार्थंघटंप्रेतविमुक्तिदम् ५७ प्रेतउवाच साधुपृष्टंमहाराजकथयामिनिबोधते प्रेतत्वंनभवेद्येनदानेनसुदृढेनच ५८ दानंप्रेतघटंनामसर्वाशुभविनाशनम् दुर्लभंसर्वलोकानांदुर्गतिक्षयकारकम् ५९ संतप्तहाटकमयंतुघटंविधायब्रह्मेशकेशवयुतंसहलोकपालैः क्षीराज्यपूर्णविवरंप्रणिपत्यभक्त्याविप्रायदेहितवदानशतैःकिमन्यैः ६० ब्रह्मामध्येतथाविष्णुःशंकरःशंकरोव्ययः प्राच्यादिषुचतत्कंठेलोकपालान्क्रमेणतु ६१ संपूज्यविधिवत्राजन्धूपैःकुसुमचंदनैः ततोदुग्धाज्यसहितंघटंदेयंहिरण्मयम् ६२

स्ववर्णरचितंब्रह्मादियुतंब्रह्मादिभिःस्वपूजार्थंस्वस्वस्थाने ह्यधिष्ठितं तेषांस्वनितनमोंतनामाक्षरैर्युक्तमित्यर्थः दुग्धघृतपूर्णंचकृत्वाअतसीपुष्पसंकाशमितिमंत्रेणप्रणम्यप्रदेहीति ६० ६१ ६२ ७

६३ तस्यभूपतेः पदंपदन्यासं अनुलक्षीकृत्यसेनाआजगाम ६४ ममकृत्यंनविस्मरणीयमितिसंप्रार्थ्य अंतर्धानंगतः ६५ ६६ ६७ विधिं-

सर्वदानाधिकंचैतन्महापातकनाशनम् कर्तव्यंश्रद्धयाराजन्प्रेतत्वविनिवृत्तये ६३ श्रीभगवानुवाच एवंसंजल्प
तस्तस्यप्रेतेनसहकाश्यप सेनाजगामानुपदंहस्त्यश्वरथसंकुला ६४ ततोबलेसमायातेदत्वाराज्ञेमहामणिम् न-
मस्कृत्यपुनःप्रार्थ्यप्रेतोदर्शनमेयिवान् ६५ तस्माद्वनाद्विनिष्क्रम्यराजापिस्वपुरंययौ स्वपुरंचसमासाद्यतत्सर्वंप्रे
तभाषितम् ६६ चकारविधिवत्पक्षिन्नौर्ध्वदैहिकजंविधिम् तस्यपुण्यप्रदानेनप्रेतोमुक्तोगादिवंययौ ६७ श्राद्धे
नपरदत्तेनगतःप्रेतोपिसद्गतिम् किंपुनःपुत्रदत्तेनपितायातीतिचाद्भुतम् ६८ इतिहासमिमंपुण्यंशृणोतिश्रावयेच्च-
यः नतौप्रेतत्वमायातःपापाचारयुतावपि ६९ इतिश्रीगरुडपुराणेसारोद्धारेबभ्रुवाहनप्रेतसंस्कारोनामसप्तमोऽध्या-
यः ७ गरुडउवाच आमुष्मिकींक्रियांसर्वांवदस्वकृतिनांमम कर्तव्यासायथापुत्रैस्तथाचकथयप्रभो १

कृत्वाप्रेतायददौ इति
हासकथनस्याभिप्रायमाह श्राद्धेनेति ६८ ६९ इतिटी०सप्तमोऽध्यायः ७ कर्मणामुष्मिकेनैवसद्गतिंलभतेनरः तद्विनानैवगरुडस्तदेवपरिपृच्छति १
आमुष्मिकीमिति अष्टमेनाममाहात्म्यंदानंचातुरकालिकं धर्मप्रशंसांप्रोवाचभगवान्धर्मवत्सलः आमुष्मिकींपरलोकोपयोगिनींसर्वांआतुरकृत्यादिकां
सत्क्रियाम् १

प्रश्नमभिनंद्य धार्मिकार्हं सुकृतिजनोचितं कृत्यं श्रीभगवानुवाच सुकृतीत्यादि २ अश्रुतिं कर्णोरुद्धे सति अतःशब्दस्य अश्रवणं चरदृष्टा नदे 

श्रीभगवानुवाच साधुपृष्टं त्वया तार्क्ष्य मानुषाणां हिताय वै धार्मिकार्हं च यत्कृत्यं तत्सर्वं कथयामि ते २ सुकृती वा
र्धके दृष्ट्वा शरीरं व्याधिसंयुतम् प्रतिकूलान् ग्रहांश्चैव प्राणघोषस्य चाश्रुतिम् ३ तदा स्वमरणं ज्ञात्वा निर्भयः स्यादतंद्रि-
नः अज्ञातज्ञातपापानां प्रायश्चित्तं समाचरेत् ४ यदा स्यादातुरः कालस्तदा स्नानं समारभेत् पूजनं कारयेद्विष्णोः शा-
लिग्रामस्वरूपिणः ५ अर्चयेद्गंधपुष्पैश्च कुंकुमैस्तुलसीदलैः धूपैर्दीपैश्च नैवेद्यैर्बहुभिर्मोदकादिभिः ६ दत्वा च
दक्षिणां विप्रान्नैवेद्यादेव भोजयेत् अष्टाक्षरं जपेन्मंत्रं द्वादशाक्षरमेव च ७ संस्मरेत्श्रृणुयाच्चैव विष्णोर्नाम शिवस्य
च हरेर्नाम हरेत्पापं नृणां श्रवणगोचरम् ८

तिद्वितीयेन संबंधः ३ निर्भयः मृत्युभयशून्यः स्यादपरिहार्यत्वात् अतंद्रितः आतुरकृत्ये निरालस्यः स्याच्चेति ४ आतुरकालोंतसमयः ५ ६ ७ 
अत्र गुरुर्यथा गुरुमंत्रं शास्त्रेण शिष्याय उपदिशति तथैव हरिरपि हरिनाममहिमा स्वमुखेनाह संस्मरेदित्यादि विंशाब्दिः ८ ९ ७

९ १० ११ १२ १३ ननु अजामिलस्तु बहुपापकृत्कथं धाम अगादिति इमामाशंकां परिहरन्नाह हरिरिति द्वाभ्याम् १४ १५ अत्र नाममा

रोगिणोंतकमासाद्य शोच्यनीयं न बांधवैः स्मारणीयं पवित्रं मे नामधेयं मुहुर्मुहुः ९ मत्स्यः कूर्मो वराहश्च नारसिंहश्च वा-
मनः रामो रामश्च कृष्णश्च बुद्धः कल्की तथैव च १० एतानि दश नामानि स्मर्तव्यानि सदा बुधैः समीपे रोगिणो ब्रूयुर्बांध
धवास्ते प्रकीर्तिताः ११ कृष्णेति मंगलं नाम यस्य वाचि प्रवर्त्तते तस्य भस्मीभवंत्याशु महापातककोटयः १२ म्रियमा-
णो हरेर्नाम गृणन्पुत्रोपचारितम् अजामिलोप्यगाद्धाम किं पुनः श्रद्धया गृणन् १३ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृ-
तः अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः १४ हरेर्नाम्नश्च या शक्तिः पापनिर्हरणे द्विज तावत्कर्त्तुं समर्थो न पातकं
पातकी जनः १५ किंकरेभ्यो यमः प्राह न वध्यं नास्ति कं जनम् नैवानयत भो दूता हरिनामस्मरन्नरम् १६ अच्युतं
केशवं राममनारायणं कृष्णदामोदरं वासुदेवं हरिम् श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे १७

हात्म्यं न सांपरायं प्रतिभाति बालं प्रमाद्यंतं धनलोभेन मूढं अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे इति श्रुत्युक्तेन यमदूतसंवादे
नाह किंकरेभ्य इत्यादि १६ हरिनामान्येवाह अच्युतमित्यादि १७

येऽच्युतादिनामकदंबं स्मरंति तान् अपापान् पुण्यरूपान् दूरतरेण त्यज तेषां समीपेपि मागच्छेत्यर्थः १८ के तर्हि दंडार्थमानेया इत्यत्राह तानिति द्वा-
भ्याम् असतः दुष्टान् तानेवाह मुकुंदपादारविंदयोर्यो मकरंदरूपो रसस्तस्माद्विमुखान् हरिभक्तिरहितानित्यर्थः कीदृशान् निष्किंचनैरजस्रंजु-

कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्रपाणे भव शरणमितीरयंति ये वै त्यज भट दूरतरेण तानपापान्
१८ तानानयध्वमसतो विमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् निष्किंचनैः परमहंसकुलैरसङ्गैर्जुष्टाद्गृहे-
निरयवर्त्मनि बद्धतृष्णान् १९ जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदम् कृष्णाय नो नमति यच्छिर
एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् २० तस्मात्संकीर्त्तनं विष्णोर्जगन्मंगलमंहसाम् महतामपि पक्षीं
द्रविद्ध्यैकांतिकनिष्कृतिम् २१ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखं न निष्पुनंति दुर्बुद्धिं सुराकुंभमिवापगाः २२

ष्टात् तेषां ज्ञापकमाह निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् १९ किंच यद्येषां जिह्वा इत्याद्यन्वयः न कृतं विष्णोः कृत्यमाराधनं
यैस्तानानयध्वमिति २० अतो हरिविमुखानेवानयंत्विति यमो दूतानाज्ञापयति तस्माज्जगतोपि मंगलरूपं महतां बहूनामप्यंहसां पापानां
एकांतिकनिष्कृतिं परमप्रायश्चित्तरूपं विद्धि २१ किंच चीर्णानि कृतान्यपि तानि हरिविमुखं न पुनंति किंतु अभक्ता नरकेष्वेव पतंतीत्यर्थः २२

तर्हि केनपतंतीत्यतआह कृष्णनाम्नैवगतंकिल्बिषंपापंयेषांतेस्वप्नेपिनयमंपश्यंतीत्यन्वयः २३ मांसास्थिरक्तानिविद्यंतेयस्यांसा मांसास्थिरक्तव-
ती साचासौकायाएववैतरणीचप्रसिद्धापिसा अस्थिवृंदतटादुर्गमामांसशोणितकर्दमाभवति अतःतत्सादृश्यात् कायापिवैतरणीएवतस्यां

कृष्णनाम्नाननरकंपश्यंतिगतकिल्बिषाः यमंचतद्भटांश्चैवस्वप्नेपिनकदाचन २३ मांसास्थिरक्तवत्कायवैतरण्यांपतेन्न-
रः योंतेदद्याद्द्विजेभ्यश्चनंदनंदनगामिति २४ अतःस्मरेन्महाविष्णोर्नामपापौघनाशनम् गीतासहस्रनामानिपठे-
द्वाश्रृणुयादपि २५ एकादशीव्रतंगीतागंगांबुतुलसीदलम् विष्णोःपादांबुनामानिमरणेमुक्तिदानिच २६ ततःसं
कल्पयेदन्नंसघृतंचसकांचनम् सवत्साधेनवोदेयाश्रोत्रियायद्विजातये २७ अंतेजनोयद्ददातिस्वल्पंवायदिवाबहु
तदक्षयंभवेत्तार्क्ष्ययत्पुत्रश्चानुमोदते २८

यथायःद्विजेभ्योगांदद्यात् सनपतेत् तथैवास्यापियः अंतसमयेनंदनंदनइतिगांवाणींद्विजेभ्योदंने-
भ्योदद्यात् तवर्गस्यदंतस्थानीयत्वात् सोपिकायवैतरण्यांनपतेत्किंतुमुक्तोभवतीत्यर्थः तत्रयथाएकाएकस्यदातव्याबहूनांनकदाचनइतिनिषेधात्
तथाचापिद्विजेभ्यश्चेतिचकारः पौनःपुन्यविधानार्थः अतोनंदनंदनइति वाणींबहुवारमावर्त्तयेदित्यविरोधः २४ २५ २६ एवंनाममाहात्म्यंनि
रूप्यइदानीं भवस्यदातव्यातुरदानेनपुत्रंप्रोत्साहयति ततइत्यादि २७ अनुमोदतेयन्मनासिचिंतयतिवाचावदतिवातदप्यक्षयंभवेदिति २८ ७

एतदर्थंआतुरदानदापनार्थम् २९ पूर्वैःपित्रैवसंचिते अनस्तस्यैवधने ३० अतिवाहःपरलोकगामीतन्मार्गेयतः आतुरदानात् ३१ अष्टमहा



अंतकालेतुसत्पुत्रःसर्वदानानिदापयेत् एतदर्थंसुतोलोकेप्रार्थ्यतेधर्मकोविदैः २९ भूमिस्थंपितरंदृष्ट्वाअर्धोन्मीलितलोचनम् पुत्रैस्तृष्णानकर्त्तव्यातद्धनेपूर्वसंचिते ३० सतद्ददातिसत्पुत्रोयावज्जीवत्यसौचिरम् अतिवाहस्तुतन्मार्गेदुःखंनलभतेयतः ३१ आतुरेचोपरागेचद्वयंदानंविशिष्यते अतोवश्यंप्रदातव्यमष्टदानंतिलादिकम् ३२ तिललोहंहिरण्यंचकार्पासोलवणंतथा सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतम् ३३ एतदष्टमहादानंमहापातकनाशनम् अंतकालेप्रदातव्यंशृणुतस्यचतत्फलम् ३४ ममस्वेदसमुद्भूताःपवित्रास्त्रिविधास्तिलाः असुरादानवादैत्यास्तृप्यंतितिलदानतः ३५ तिलाःश्वेतास्तथाकृष्णादानेनकपिलास्तिलाः संहरंतित्रिधापापंवाङ्मनःकायसंचितम् ३६ लोहदानंचदातव्यंभूमियुक्तेनपाणिना यमसीमांनचाप्नोतिनगच्छेत्तस्यवर्त्मनि ३७ कुठारोमुशलोदंडःखड्गश्चच्छुरिकातथा शस्त्रायेयमहस्तेचनिग्रहेपापकर्मणाम् ३८

दानंफलसहितमाह ममेति ३२ ३३ ३४ ३५

तिलदानात्फलमाह असुराइतिसार्द्धेन ३६ भूमियुक्तेनभूम्यांकरंधृत्वेत्यर्थः ३७ लोहदानफलमाह यमइतिसार्द्धत्रिभिः ३८ ७

३९ ४० स्वर्णदानफलमाह शृण्वितिचतुर्भिः ४१ ४२ ४३ ४४ ४५ लोहादिपंचदानेनतुष्टाभवंतिइतिशेषः ४६ त्रिषुवक्ष्यमाणेषु ४७

यमायुधानोसंतुष्ट्यैदानमेनदुदाहृतम् तस्माद्द्याल्लोहदानंयमलोकेसुखावहम् ३९ ऊरणःश्यामसूत्रश्चशुंडामर्को प्युदुंबरः शेषश्चलोमहादूतालोहदानात्सुखप्रदाः ४० शृणुतास्यपरंगुह्यंदानानांदानमुत्तमम् दत्तेनतेनतुष्यंतिभूर्भु वःस्वर्गवासिनः ४१ ब्रह्माद्याऋषयोदेवाधर्मराजसभासदः स्वर्णदानेनसंतुष्टाभवंतिवरदायकाः ४२ तस्माद्देयंस्व र्णदानंप्रेतोद्धरणहेतवे नयातियमलोकंसस्वर्गतिंतातगच्छति ४३ चिरंवसेत्सत्यलोकेततोराजाभवेदिह रूप- वान्धार्मिकोवाग्मीश्रीमानतुलविक्रमः ४४ कार्पासस्यतुदानेनदूतेभ्योनभयंभवेत् लवणंदीयतेयच्चतेननैवभ- यंयमात् ४५ अयोलवणकार्पासतिलकांचनदानतः चित्रगुप्तादयस्तुष्टायमस्यपुरवासिनः ४६ सप्तधान्यप्रदानेन प्रीतोधर्मध्वजोभवेत् तुष्टाभवंतियेन्येपित्रिषुद्वारेष्वधिष्ठिताः ४७ व्रीहयोयवगोधूमामुद्गामाषाःप्रियंगवः चणकाः सप्तमाज्ञेयाःसप्तधान्यमुदाहृतम् ४८

भूमिदानफलमाह ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६

गोचर्मप्रमाणंयथा गोशतंवृषसंयुक्तंयत्रोपविशतेभुवि तद्भूपरिमितंज्ञेयंगोचर्ममामसुत्तममिति ४९ ५० स्वल्पेनभूमिदानेनतुमहापापमप-
याति किंच सस्यपूर्णायाः प्रदानेनतुइंद्रभुवनंप्रयातीत्याह पृथिवीमिति ५१ ५२ अदानेदोषमाह यइति द्वाभ्याम् कुटींस्वकीयांपर्णशालां

गोचर्ममात्रंवसुधादत्तापात्रेविधानतः पुनातिब्रह्महत्यायादृष्टमेतन्मुनीश्वरैः ४९ नव्रतेभ्योनतीर्थेभ्योनान्यद्दाना-
द्विनश्यति राज्येकृतंमहापापंभूमिदानाद्विलीयते ५० पृथिवींसस्यसंपूर्णांयोददातिद्विजातये सप्रयातींद्रभवने
पूज्यमानःसुरासुरैः ५१ अत्यल्पफलदानिस्युरन्यदानानिकाश्यप पृथिवीदानजंपुण्यमहन्यहनिवर्द्धते ५२
योभूत्वाभूमिपोभूमिंनोददातिद्विजातये सनाप्नोतिकुटींग्रामेदरिद्रोस्यात्भवेभवे ५३ अदानात्भूमिदानस्यभूप
तित्वाभिमानतः निवसेन्नरकेयावत्शेषोधारयतेधराम् ५४ तस्मात्भूमीश्वरोभूमिदानमेवप्रदापयेत् अन्येषां
भूमिदानार्थंगोदानंकथितंमया ५५ ततोंतधेनुर्दातव्यारुद्रधेनुंप्रदापयेत् ऋणधेनुंततोदत्वामोक्षधेनुंप्रदापयेत् ५६

मप्यनाप्नोतिईदृशोदरिद्रोस्यात् ५३ तावन्निवसेदितिसंबंधः ५४ भूमेरपिगोरूपत्वात्गोदानमेव ५५ अंतधेनुः अष्टदानोक्तारुद्रधेनुंश्रीरुद्र
स्यसूक्तंजपत्वान्मुत्स्कदुःखनिवृत्त्यर्थंऋणधेनुः ज्ञाताज्ञातऋणविमुक्त्यर्थंमोक्षधेनुः मोक्षार्थंवैतरणीतारणार्थंपंचमीचेति ५६ ७

५७ बालत्वादिषुयत् पापंकृतंतस्मात्तारयंतीतिपूर्वेणैवसंबंधः ५८ ५९ सकृत्सर्वजन्मनिएकवारमेकापि ६० ६१ स्वस्थचित्तस्यसाव-
धानस्यतुएकैवगौःआतुरस्यसन्निहितमरणस्यतुगोशतं अग्रिमक्षणेमरिष्यतीतिम्रियमाणस्तस्यतुचित्तविवर्ज्जितंदानानुसंधानरहितंदत्तं

दद्याद्वैतरणींधेनुंविशेषविधिनाखग तारयंतिनरंगावस्त्रिविधाच्चैवपातकात् ५७ बालत्वेयच्चकौमारेयत्पापंयौ-
वनेकृतम् वयःपरिणतौयच्चयच्चजन्मांतरेष्वपि ५८ यन्निशायांतथाप्रातर्यन्मध्यान्हपराण्हयोः संध्ययोर्यत्कृ-
तंपापंकायेनमनसागिरा ५९ दत्वाधेनुंसकृद्ध्यपिकपिलांक्षीरसंयुताम् सोपस्करांसवत्सांचुतपोवृत्तसमन्विते
६० ब्राह्मणेवेदविदुषेसर्वपापैःप्रमुच्यते उद्धरेदंतकालेसादातारंपापसंचयात् ६१ एकागौःस्वस्थचित्तस्यह्या-
तुरस्यचगोशतम् सहस्रंम्रियमाणस्यदत्तंचित्तविवर्जितम् ६२ मृतस्यैतत्पुनर्लक्षंविधिपूतंचतत्समम् तीर्थ-
यात्रासमोपेतंदानमेकंचलक्षधा ६३ पात्रेदत्तंचयद्दानंतल्लक्षगुणितंभवेत् दातुःफलमनंतंस्यान्नपात्रस्यप्रतिग्रहः ६४

गोसहस्रंचमृतस्यमरणानंतरंचगवांलक्षंएतत्सर्वंसमतुल्यफलदंभवति अतःस्वस्थावस्थायामेवदेयमितिभावः एवमपिएकगोदानमन्यद्य
तीर्थयात्राभ्यांसम्यगुपेतंयुक्तंतत्लक्षधाभवतीत्यर्थः ६३ ६४ ७ ७ ७ ७ ७

६५ ६६ अपात्रेदानेनतुमहतीविनष्टिरित्याह अपात्रइतिसार्द्धेन ६७ पात्राणामपि बहूनामेकानदेयेत्याह ६८ ६९ दद्याद्वैतरणींधेनुंभि



स्वाध्यायहोमसंयुक्तःपरपाकविवर्जितः रत्नपूर्णामपिमहींप्रतिगृह्यनलिप्यते ६५ विषशीतापहोमंत्रवन्हौकिंदोषभा
गिनौ अपात्रेसाचगौर्दत्तादातारंनरकंनयेत् ६६ कुलैकशतसंयुक्तंगृहीतारंतुपातयेत् नापात्रेविदुषादेयाआ-
त्मनःश्रेयइच्छता ६७ एकात्येकस्यदातव्याबहूनांनकदाचन साविक्रीताविभक्तावादहत्यासप्तमंकुलम्
६८ कथितायामयापूर्वंतववैतरणीनदी तस्याउद्धरणोपायंगोदानंकथयामिते ६९ कृष्णांवापाटलांवापिधे-
नुंकुर्यादलंकृताम् स्वर्णशृंगींरौप्यखुरांकांस्यपात्रोपदोहिनीम् ७० कृष्णवस्त्रयुगच्छन्नांकंटघंटासमन्विताम्
कार्पासोपरिसंस्थाप्यताम्रपात्रंसचैलकम् ७१ यमंहैमंन्यसेत्तत्रलोहदंडसमन्वितम् कांस्यपात्रेघृतंकृत्वासर्वं-
तस्योपरिन्यसेत् ७२ नावमिक्षुमयींकृत्वापट्टसूत्रेणवेष्टयेत् गर्त्तंविधायसजलंकृत्वातस्मिन्क्षिपेत्तरिम् ७३
तस्योपरिस्थितांकृत्वासूर्यदेहसमुद्भवाम् धेनुंसंकल्पयेत्तत्रयथाशास्त्रविधानतः ७४

शेषविधिनारवग इतिपूर्वसूचितविशेषविधिमेवाह कृष्णामिति ७० ७१ ७२ ७३ ७४ ७५ ७६ ७७

७५ ७६ ७७ ७८ वैतरणींवितरणंदानंतद्रूपिणीमेनांधेनुम् ७९ मांप्रतीक्षस्ववैतरण्याःसकाशादुत्तारणार्थंत्वंमांप्रतीक्षस्वहृ-

सालंकाराणिवस्त्राणिब्राह्मणायप्रकल्पयेत् पूजांकुर्याद्विधानेनगंधपुष्पाक्षतादिभिः ७५ पुच्छंसंगृह्यधेनोस्तुनाव-
माश्रित्यपादतः पुरस्कृत्यततोविप्रमिमंमंत्रमुदीरयेत् ७६ भवसागरमग्नानांशोकतापोर्मिदुःखिनाम् त्रातात्वंहि
जगन्नाथःशरणागतवत्सलः ७७ विष्णुरूपद्विजश्रेष्ठमामुद्धरमहीसुर सदक्षिणामयादत्तातुभ्यंवैतरणीनमः
७८ यममार्गेमहाघोरेतांनदींशतयोजनाम् ततुकामोददाम्येतांतुभ्यंवैतरणींनमः ७९ धेनुकेमांप्रतीक्ष
स्वयमद्वारेमहापथे उत्तारणार्थंदेवेशिवैतरण्येनमोस्तुते ८० गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमे
हृदयेसंतुगवांमध्येवसाम्यहम् ८१ यालक्ष्मीःसर्वभूतानांयाचदेवेप्रतिष्ठिता धेनुरूपेणसादेवीममपापंव्य-
पोहतु ८२ इतिमंत्रैश्चसंप्रार्थ्यसांजलिर्धेनुकांयमम् सर्वप्रदक्षिणीकृत्यब्राह्मणायनिवेदयेत् ८३

ष्टिंकुरुष्व ८० यममार्गभयभीतस्य वाक्यमिदंगावोमइति ८१ भूतानांनरेंद्रादीनांदेवेंद्रादिषुप्रतिष्ठितास्थितायालक्ष्मीःअस्तिसाएव-
त्वंधेनुरूपेणासि अतोव्यपोहतु दूरीकरोतु ८२ सर्वंउपस्करम् ८३ ७ ७ ७ ७

८४ व्रतंअवश्यंधेनुंदास्यामीतिनियमंकुर्यात् ८५ आवसथेषुगृहेषु ८६, ८७ अयनेविषुवेमकरकर्कमेषतुलासंक्रांतिदिनेयुगादिषु-
अक्षय्यतृतीयादिषु ८८ सएवश्रद्धापात्रयोः संयोगएवअतोऽन्यत्पुण्यकालापेक्षानकर्त्तव्येत्यर्थः ८९ इदंधेन्वादिदानंस्वहस्तदत्तंसत्स्वर्गसुख

एवंदद्याद्विधानेनयोगांवैतरणींखग सयातिधर्ममार्गेणधर्मराजसभांतरे ८४ स्वस्थावस्थशरीरेतुवैतरण्यांव्रतंचरे-
त् देयाचविदुषाधेनुस्तांनदींतर्त्तुमिच्छता ८५ सानायातिमहामार्गेगोदानेननदीखग तस्मादवश्यंदातव्यंपु-
ण्यकालेषुसर्वदा ८६ गंगादिसर्वतीर्थेषुब्राह्मणावसथेषुच चंद्रसूर्योपरागेषुसंक्रांतौदर्शवासरे ८७ अयने
विषुवेचैवव्यतीपातेयुगादिषु अन्येषुपुण्यकालेषुदद्यात्गोदानमुत्तमम् ८८ यदैवजायतेश्रद्धापात्रंसंप्रा-
प्यतेयदा सएवपुण्यकालःस्याद्यतःसंपत्तिरस्थिरा ८९ अस्थिराणिशरीराणिविभवोनैवशाश्वतः नित्यंसन्नि
हितोमृत्युःकर्त्तव्योधर्मसंचयः ९० आत्मवित्तानुसारेणतत्रदानमनंतकम् देयंविप्रायविदुषेस्वात्मनःश्रेयइ
च्छता ९१ अल्पेनापिहिवित्तेनस्वहस्तेनात्मनेकृतम् तदक्षयंभवेद्दानंतत्कालंचोपतिष्ठति ९२

प्रदंभवति अतोवैराग्यमुत्पादय
न्स्वहस्तदानेश्रद्धामुत्पादयति अस्थिराणीत्यादि ९० तत्रपात्रेआत्मवित्तानुसारेणबहुवित्तेसतिस्वल्पंनदेयमितिभावः ९१ ९२ ५ ७

गृहीतंदानपाथेयंपरलोकभोग्यंयेनअन्यथापाथेयंविनापथि अस्मिंल्लोकमार्गेयथाशक्तिःक्लिश्यते तथैवामुत्रापि ९३ ९४ ९५ अविज्ञाय अज्ञा

गृहीतदानपाथेयःसुखंयातिमहाध्वनि अन्यथाक्लिश्यतेजंतुःपाथेयरहितःपथि ९३ यानियानिचदानानिदत्तानिभुविमानवैः यमलोकपथेतानिह्युपतिष्ठंतिचाग्रतः ९४ महापुण्यप्रभावेनमानुषंजन्मलभ्यते यस्तत्प्राप्यचरेद्धर्मंसयातिपरमांगतिम् ९५ अविज्ञायनरोधर्मंदुःखमायातियातिच मनुष्यजन्मसाफल्यंकेवलंधर्मसेवनम् ९६ धनपुत्रकलत्रादिशरीरमपिबांधवाः अनित्यंसर्वमेवेदंतस्माद्धर्मंसमाचरेत् ९७ तावद्बंधुःपितातावद्यावज्जीवतिमानवः मृतानामंतरंज्ञात्वाक्षणात्स्नेहोनिवर्त्तते ९८ आत्मैवह्यात्मनोबंधुरितिविद्यान्मुहुर्मुहुः जीवन्नपीतिसंचिंत्यमृतानांकःप्रदास्यति ९९ एवंजानन्निदंसर्वंस्वहस्तेनैवदीयताम् अनित्यंजीवितंयस्मात्पश्चात्कोपिनदास्यति १०० मृतंशरीरमुत्सृज्य काष्ठलोष्ठसमंक्षितौ विमुखाबांधवायांतिधर्मस्तमनुगच्छति १

त्वाकुलेत्यर्थः ९६ ९७ ९८ जीवन्नप्यात्मैवबंधुःस्वस्यहितकर्ताजीवतामपिनोदत्तम्तर्हिमृतानांकः नकोपिदास्यतीत्यर्थः अतएवंजानन्नितिद्वितीयेनसंबंधः ९९ सर्वइदं आतुरदानम् १०० १

२ ३ ४॰५ ६ धनंयावत् आत्मायत्तं आत्मनः स्वस्यआयत्तंआधीनंभवसेवंमत्ताकिंचिद्देयमरेइतिवक्तुमपिनोत्सहते उत्साहेनवक्तुमपि-

गृहादर्थानिवर्त्तंतेश्मशानात्सर्वबांधवाः शुभाशुभंकृतंकर्मगच्छंतमनुगच्छति २ शरीरंवन्हिनादग्धंकृतंकर्मसहास्थि तम् पुण्यंवायदिवापापंभुंक्तेसर्वत्रमानवः ३ नकोऽपिकस्यचिद्बंधुःसंसारेदुःखसागरे आयातिकर्मसंबंधाद्यातिक्षयेपुनः ४ मातृपितृसुतभ्रातृबंधुदारादिसंगमः प्रपायामिवजंतूनांनद्यांकाष्ठौघवच्चलः ५ कस्यपुत्राश्चपौत्राश्चकस्यभार्याधनंचवा संसारेनास्तिकःकस्यस्वयंतस्मात्प्रदीयताम् ६ आत्मायत्तंधनंयावत्तावद्विप्रेसमर्पयेत् पराधीनंधनेजातेनकिंचिद्वक्तुमुत्सहेत् ७ पूर्वजन्मकृताद्दानादत्रलब्धंधनंबहु तस्मादेवपरिज्ञायधर्मार्थंदीयतांधनम् ८ धर्मात्संजायतेर्थश्चधर्मात्कामोभिजायते धर्मएवापवर्गायतस्माद्धर्मंसमाचरेत् ९ श्रद्धयाधार्यतेधर्मोबहुभिर्नार्थराशिभिः निष्किंचनाहिमुनयःश्रद्धावंतोदिवंगताः १०

योग्योनभवति तर्हिदातुंयोग्यःकुतइत्यर्थः ७ निदर्शनमाह पूर्वइतिधनंच धर्मैकफलमिति धर्मार्थमेवदीयताम् ८ चतुर्वर्गफलदात्वंधनस्यैवेत्याह धर्मादिति ९ श्रद्धापूतधर्मएवसद्गतिप्रदोभवतीत्याह श्रद्धयाइतिद्वाभ्याम् १० ७ ८ ९

भक्त्याउपहृतंसमर्पितंतत्पत्रादिप्रयतात्मनः श्रद्धापूतचित्तस्याहमश्नामीति ११ स्वहस्तदानंश्लाघ्यपुत्रदत्तंस्तौति १२ देवानांसमूहोदैव-
तं तैर्दैवसमूहैरपि १३ तेनैवविंत्तेनपुत्रादिभिः सहस्वयमपिनिःपापोभवतीत्यर्थः १४ पितुर्निमित्तमित्यनुवृत्तमेवास्याप्यर्थः गर्भधारण

पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ११ तस्मादवश्यंदातव्यंतदादानेवि
धानतः अल्पंवाबहुवेतीयंगणनांनैवकारयेत् १२ धर्मात्माचसपुत्रोवैदैवतैरपिपूज्यते दापयेद्यस्तुदानानिपित-
रंस्मातुरंभुवि १३ पित्रोर्निमित्तंयद्वित्तंपुत्रैःपात्रेसमर्पितम् आत्मापिपावितस्तेनपुत्रपौत्रप्रपौत्रकैः १४ पितुः
शतगुणंपुण्यंसहस्रंमातुरेवच भगिनीदशसाहस्रंसोदरेदत्तमक्षयम् १५ नचैवोपद्रवादातुर्नचानरकयातं-
नाः मृत्युकालेचनभयंयमदूतसमुद्भवम् १६

पोषाभ्यांपितुर्माता गरीयसीतिहेतोः सहस्रंदयायाभगिनीभूतिरितिहेतोर्द
शसहस्रंनदयासदृशंदानमितिवचनाच्चेतिसोदरस्यापिसमानोदरजन्मत्वा दात्मतुल्यत्वंअतस्तद्दत्तमक्षयंभवति तदक्षयंभवेद्दानंस्वहस्तेनात्मनेकृत-
मितिपूर्वोक्तवचनादिति १५ दानदातुःपुत्रस्यापिइहतुउपद्रवाभावार्थोनपरत्रनचेत्यादि अत्रापितेनैववित्तेनेति पूर्वस्यैवानुवृत्तिः १६ ७

भदत्तेदोषमाह यदीतिद्वाभ्याम् १७ १८ इतिटीकायामष्टमोऽध्यायः ८ तुलस्यादिकमाहात्म्यंसंन्यासविधिपूर्वकम् उवाचनवमेध्यायेम्रि

यदिलोभान्नयच्छंतिकालेत्वातुरसंज्ञके मृताःशोचंतितेसर्वेकदर्याःपापिनःखग १७ पुत्राःपौत्राःसहभ्रात्रासगोत्राः
सुहृदस्तथा दद्युर्दानंतदातुरेदानंब्रह्मघ्नास्तेनसंशयः १८ इतिश्रीगरुडपुराणेसारोद्धारेआतुरदाननिरूपणोनामअष्ट
मोऽध्यायः ८ गरुडउवाच कथितंभवतासम्यक्दानमातुरकालिकम् म्रियमाणस्ययत्कृत्यंतदिदानींवदप्र-
भो १ श्रीभगवानुवाच शृणुतार्क्ष्यप्रवक्ष्यामिदेहत्यागस्ययद्विधिम् मृतायेनविधानेनसद्गतिंयांतिमान
वाः २ कर्मयोगाद्यदादेहीमुंचत्यत्रनिजंवपुः तुलसीसन्निधौकुर्यान्मंडलंगोमयेनतु ३ तिलांश्चैवविकी-
र्याथदर्भांश्चैवविनिक्षिपेत् स्थापयेदासनेशुभ्रेशालिग्रामशिलांतदा ४ शालिग्रामशिलायत्रपापदोषभया
पहा तत्संनिधानमरणान्मुक्तिर्जंतोःसुनिश्चिता ५

यमाणविधिंहरिः १ गरुडःपृच्छति अग्रिमक्षणेमरिष्यतीतिम्रियमाणस्तस्ययत्कृत्यंतद्वद १ येनमृतःसद्गतिंयातितद्विधिंशृणु २ कर्मयोगा
त्प्रारब्धकर्मोदयात् देहीजीवः निजंआत्मत्वेनस्वीकृतंवपुः अत्रयदात्यजति तदामंडलंकुर्यादित्यन्वयः ३ ४ ५ ६ ७

६ ७ ८ ९ ननुअपुत्रस्यगतिर्नास्तीतिपूर्वोक्तविरोधात्पुत्रहीनः कथंविष्णुपुरंयातिसतुदुर्गतिमेवयातिइतिचेत्तत्राह एतेति

तुलसीविटपच्छायायत्रास्तिभवतापहा तत्रैवमरणान्मुक्तिःसर्वदादानदुर्लभा ६ तुलसीविटपस्थानंगृहेयस्या
वतिष्ठते तन्गृहंतीर्थरूपंहिनयांतियमकिंकराः ७ तुलसीमंजरीयुक्तोयस्त्यक्प्राणान्विमुंचति यमस्तंनेक्षितुं-
शक्तोयुक्तंपापशतैरपि ८ तस्यादलंमुखेकृत्वातिलदर्भासनेमृतः नरोविष्णुपुरंयातिपुत्रहीनोप्यसंशयः ९ तिलाः
पवित्रास्त्रिविधादर्भाश्चतुलसीरपि नरंनिवारयंत्येतेदुर्गतिंयांतमातुरम् १० ममस्वेदसमुद्भूतायतस्तेपावनास्तिलाः
असुरादानवादैत्याविद्रवंतितिलैस्ततः ११ दर्भाविभूतिर्मेताक्ष्र्यममरोमसमुद्भवाः अतस्तत्स्पर्शनादेवस्वर्गंगच्छं-
तिमानवाः १२ कुशमूलेस्थितोब्रह्माकुशमध्येजनार्दनः कुशाग्रेशंकरोदेवस्त्रयोदेवाःकुशेस्थिताः १३

लादयोदुर्गतिंयांतंनिवारयंति १० ननुतिलादीनांईदृशोमहिमाकुतइतिचेत्तत्राह ममेति ११ दर्भेति कुशोस्मितृणजातीनांरोमाण्युद्भि
ज्जजातीनांउत्पत्तिस्थानानिभगवद्वचनादिति १२ कुशस्यातिपावनतामाह कुशइति १३ ७ ८ ९

क्रियमाणाः कर्माणिप्रयुज्यमाना अपिनिर्माल्यतांअयोग्यतांनयांति १४ सामान्यशास्त्राद्विशेषशास्त्रस्यबलवत्तामाह दर्भेति नीचेनीचजाति



अतःकुशावह्निमंत्रतुलसीविप्रधेनवः नैतेनिर्माल्यतांयांतिक्रियमाणाःपुनःपुनः १४ दर्भाःपिंडेषुनिर्माल्याब्राह्मणाःप्रे-
तभोजने मंत्रागोस्तुलसीनीचेचितायांचहुताशनः १५ गोमयेनोपलिप्तेतुदर्भास्तरणसंस्कृते भूतलेह्यातुरंकु-
र्यादंतरिक्षंविवर्ज्जयेत् १६ ब्रह्माविष्णुश्चरुद्रश्चसर्वेदेवाहुताशनः मंडलोपरितिष्ठंतितस्मात्कुर्वीतमंडलम् १७
सर्वत्रवसुधापूतालेपोयत्रनविद्यते यत्रलेपःकृतस्तत्रपुनर्लेपेनशुद्ध्यति १८ राक्षसाश्चपिशाचाश्चभूताःप्रेतायमा-
नुगाः अतिसदेशेस्वच्छायामंतरिक्षेविशंतिच १९ अतोग्निहोत्रश्राद्धंचब्रह्मभोज्यंसुरार्चनम् मंडलेनविनाभूम्या-
मातुरंनैवकारयेत् २० लिप्तभूम्यामतःकृत्वास्वर्णरत्नंमुखेक्षिपेत् विष्णोःपादोदकंदद्याच्छालिग्रामस्वरूपिणः
२१ शालिग्रामशिलातोयंयःपिबेद्बिंदुमात्रकम् ससर्वपापनिर्मुक्तोवैकुंठभुवनंव्रजेत् २२

हनिर्माल्याअयाह्याः १५ प्रासंगिकंपरिसमाप्यप्रकृतमनुसरतिगोमयेनेति १६, १७ १८ १९ सुरार्चनंदेवपूजाम् २० २१ २२ ७
मुखेमंत्राःगौस्तुलसीचतद्व- ४३

२३ २४ २५ २६ इतराअन्यानद्यः अवगाहेन स्नानेन गंगातुदर्शनादिभिरेवपुनाति इतिद्वितीयेनान्वयः २७ २८ जल-

ततोगंगाजलंदद्यात्महापातकनाशनम् सर्वतीर्थकृतस्नानदानपुण्यफलप्रदम् २३ चांद्रायणंचरेद्यस्तुसहस्रंकायशोधनम् पिबेद्यश्चैवगंगांभःसमौस्यातामुभावपि २४ अग्निंप्राप्ययथाताक्ष्यतूलराशिर्विनश्यति तथागंगांबुपानेनपातकंभस्मसाद्भवेत् २५ यस्तुसूर्यांशुसंतप्तंगांगेयंसलिलंपिबेत् ससर्वयोनिनिर्मुक्तःप्रयातिसदनंहरेः २६ नद्योजलावगाहेनपावयंतीतरोजनान् दर्शनात्स्पर्शनात्पानात्तथागंगेतिकीर्त्तनात् २७ पुनात्यपुण्यान्पुरुषान् शतशोथसहस्रशः गंगातस्मात्पिबेत्तस्याजलंसंसारतारकम् २८ गंगागंगेतियोब्रूयात्प्राणैःकंठगतैरपि मृतोविष्णुपुरंयातिनपुनर्जायतेभुवि २९ उत्क्रमद्भिश्चयःप्राणैःपुरुषःश्रद्धयान्वितः चिंतयेन्मनसागंगांसोपियातिपरांगतिम् ३० अतोध्यायेन्नमेद्गंगांसंस्मरेत्तज्जलंपिबेत् ततोभागवतंकिंचित्शृणुयान्मोक्षदायकम् ३१ श्लोकंश्लोकार्द्धपादंवायोंतेभागवतंपठेत् नतस्यपुनरावृत्तिर्ब्रह्मलोकात्कदाचन ३२

पानमहिमातुकिंवर्ण्यतेनतत्स्मरणचिंतनादपिमुक्तोभवतीत्याह गंगेतिद्वाभ्याम् २९ ३० ३१ ३२ ५ ५

३३ अनशनंजलान्नपरित्यागः अनाशनेकाश्यपयाक्षयागतिरितिहेतोः कुर्यादिति अथातुरसंन्यासंनिर्धारयतिद्याद्दितिसार्द्धेन अत्रयद्यपि-
ब्राह्मणाःप्रव्रजंतिइतिश्रुतेर्मुखजानामयंधर्मोयद्विष्णोर्लिंगधारणम् बाहुजातोरुजातानामयंधर्मोनविद्यते इतिस्मृतिनिषेधात् ब्राह्मणस्यैव
प्रव्रज्यानतुक्षत्रियादेरित्याहुः तथापियदहरेवविरजेत्तदहरेवप्रव्रजेदित्यादिश्रुतेस्त्रैवर्णिकसाधारणत्वात् त्रयाणांवर्णानांवेदमधीत्याश्रमाचर
णमितिसूत्रकारवचनाच्च मुखजानामयंधर्मोवैष्णवंलिंगधारणम् बाहुजातोरुजातानांत्रिदंडंनविधीयते इतिदंडविषयेनिषेधदर्शनाच्च सो
पवीतयोर्वेदमधीतयोर्विरक्तयोःक्षत्रियवैश्ययोरपिदंडधारणमंतरेणकेवलंप्रेषमंत्रोच्चारणमात्रएवातुरसंन्यासाधिकारः नत्वनुपवीतयोर्गूढहारू-

वेदोपनिषदांपाठात् शिवविष्णुस्तवादपि ब्राह्मणक्षत्रियविशांमरणंमुक्तिदायकम् ३३ प्राणप्रयाणसमयेकुर्यादनशनं
खग दद्यादातुरसंन्यासंविरक्तस्यद्विजन्मनः ३४

ढमूढयोरित्याहुः किंच द्विजन्मनइत्युक्तवताश्रीभगवताप्ययमेवपक्षःस्वीकृतः क्षत्रिय
वैश्ययोरपिद्विजन्मनत्वादातुरसंन्यासाधिकारः सूचितः इतिप्रतीमः तथापिविरक्तस्यैवकिमर्थंयदिसंन्यासोत्तरंप्रारब्धवशात् जीवितोपिपुनर्भोग-
मुमन्यावांताशित्वंस्यात् किंतु गृहात्प्रव्रजेदेवेति तदुक्तंमनुना आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेत्गृहात् ब्राह्मणःक्षत्रियोवापिवैश्योवाप्र
व्रजेत् गृहादितिस्मरणाच्चेति अत्रायंविशेषः ब्राह्मणस्तुदंडधारणंकृत्वाक्षत्रियोवैश्यश्चउपशमादिसंन्यासंन्यासधर्मान्स्वीकृत्यप्रव्रजेदिति अलं-
प्रासंगिकेन ३४

एतदेवसूचयति संन्यस्तमिति ॐ भूःसंन्यस्तंमया ॐ भुवःसंन्यस्तंमया ॐस्वःसंन्यस्तंमया ॐ भूर्भुवःस्वःसंन्यस्तंमयास्वाहा गायत्री ॐ पुत्रैषणाया
वित्तैषणायाल्लोकैषणायाश्चव्युत्थितोहंस्वाहाशिरश्च ॐ अभयोसर्वभूतेभ्योमत्तः स्वाहेत्यादिप्रैषमंत्रानुच्चार्य अहंब्रह्मास्मीत्यनुभववाक्यार्थ
विचारणेनब्रह्मपरोभूयादित्यातुरविधिः अत्रदंडधारणेतुदाहः तिलोदकपिंडदानादिकंचनस्यात्तस्यबहिः संन्यस्तस्यतुरीयाश्रमत्वात् अस्याहंब्र-

संन्यस्तमितियोब्रूयात्प्राणैःकंठगतैरपि मृतोविष्णुपुरंयातिनपुनर्जायतेभुवि ३५ एवंजातविधानस्यधार्मिकस्यत-
दात्वग ऊर्ध्वच्छिद्रेणगच्छंतिप्राणास्तस्यस्फरवेनहि ३६ मुखंचचक्षुषीनासेकर्णौद्वाराणिसप्त च एभ्यःस्फूर्तिनोयां
तियोगिनस्तालुरंध्रतः ३७ अपानान्मिलितप्राणोयदाहिभवतिपृथक् सूक्ष्मीभूत्वातदावायुर्विनिःक्रामतिपुत्तलात् ३८

ह्यास्मीत्यंतः संन्यस्यतुपारलौकिकमपिसर्वंवक्ष्यमाणंकर्मकुर्यादितिविशेषः किंच सांप्रदायिकानांतुइदमप्यनभिमतमेवतेतुब्राह्मणस्यापिदंडधा
रणंविनातुरसंन्यासोनास्ति क्षत्रियवैश्ययोश्चसर्वथैवानधिकारइत्येवंवदंतीति ३५ एवंउक्तप्रकारेणजातंविधानंआतुरकृत्यंयस्यतस्य ३६
ऊर्ध्वच्छिद्राण्येवाह मुखमिति ३७ प्राणोत्क्रमणेनशरीरत्यागप्रकारमाह अपानादिति नाभिस्थानेमिलितयोःप्राणापानयोर्यदाविश्लेषो
भवति तदासूक्ष्मीभूत्वातींद्रियः सन् वायुःप्राणःपुत्तलात् शरीरान्निःसरति ३८ ७ ७ ७ ७

मरुतीश्वरेशरीराधारभूते प्राणेयथानिराधारोद्रुमः पतति एवंपतने ३९ गतप्राणस्यशरीरस्यावस्थामाह निर्विचेष्टमितिद्वाभ्याम् ४० ईदृशेदेहे ४१ पृथिव्यादीनांस्वस्वरूपेलयमाह सपादेन ४२ आत्मानुजायते अस्तिवर्द्धतेविपरिणमते अपक्षीयतेनश्यतीत्येवंभाष्यकारादिभि

शरीरंपततेपश्चान्निर्गतेमरुतीश्वरे कालाहतंपतत्येवंनिराधारोयथाद्रुमः ३९ निर्विचेष्टंशरीरंतुप्राणैर्मुक्तंजुगुप्सितम् अस्पृश्यंजायतेसद्योदुर्गंधंसर्वनिंदितम् ४० त्रिधावस्थाशरीरस्यकृमिविड्भस्मरूपतः किंगर्वःक्रियतेदेहेक्षणविध्वंसिभिर्नरैः ४१ पृथिव्यांलीयतेपृथ्वीआपश्चैवतथाप्सुच तेजस्तेजसिलीयेतसमीरस्तत्समीरणे ४२ आकाशश्चतथाकाशेसर्वव्यापीचशंकरः नित्यमुक्तोजगत्साक्षीआत्मदेहेष्वजोमरः ४३ सर्वेंद्रिययुतोजीवःशब्दादिविषयैर्वृतः कामरागादिभिर्युक्तःकर्मकोशसमन्वितः ४४ पुण्यवासनयायुक्तोनिर्मितेस्वेनकर्मणासंप्रविश्यनवेदेहेगृहेदग्धेयथागृही ४५

रुक्तषड्भावविकाररहितएवास्ति ४३ ननुपृथिव्यादयस्तत्स्वस्वसूक्ष्मस्वरूपेलीनाभवंति आत्माचनित्यमुक्तोजगत्साक्षीभवतितर्हिकर्मफलभोक्ता कः इत्याशंकायांजीवएवपुण्यापुण्यवासनानुसारेणशुभाशुभकर्मफलभोक्तास्तिइतिव्यावहारिकंजीवस्वरूपंनिरूपयन्नाह सर्वइति ४४ ४५

४६ धार्मिकावल्लभायेषांतेदेवदूताः कृतंश्चातुरकृत्यंयेनतंएनंधार्मिकेस्वःस्वर्गलोकेनयंति ४७ स्रुष्ठुशोभनोदिव्यस्तेजोमयोदेहोयस्यस-
देवरूपःसन्नाकंस्वर्गादिलोकंतत्क्षणमेवप्राप्नोतीति नहिसुकृतिनांवर्षपर्यंतंयममार्गगमनंभवतीतिभावः ४८ इतिटीकायांनवमोऽध्यायः

तदाविमानमादायकिंकिणीजालमालियत् आयांतिदेवदूताश्चलसच्चामरशोभिनाः ४६ धर्मतत्वविदःप्राज्ञाःस- ९
दाधार्मिकवल्लभाः तदैनंकृतकृत्यंस्वर्विमानेननयंतिते ४७ सुदिव्यदेहोविरजांबरस्त्रक्सुवर्णरत्नाभरणैरुपेतः दान
प्रभावात्समहानुभावःप्राप्नोतिनाकंसुरपूज्यमानः ४८ इतिश्रीगरुडपुराणेसारोद्धारेम्रियमाणकृत्यनिरूपणोनाम-
नवमोऽध्यायः ९ गरुडउवाच देहदाहविधानंचवदसुकृतिनांविभो सतीयदिभवेत्पत्नीतस्याश्चमहिमावद
१ श्रीभगवानुवाच शृणुतार्क्ष्यप्रवक्ष्यामिसर्वमेवौर्ध्वदैहिकम् यत्कृत्वापुत्रपौत्रश्चमुच्यंतेपैतृकादृणात्
२

स्वर्गगतस्यजीवस्यदेहदाहविधिंखग सत्याविधानंमहिमांहरिंचपरिपृच्छति १ दाहतृतीयदिनयोः पंचकस्यविधिंतथासतीगंगाप्रभावं
चदशमेप्राहमाधवः २ देहइति १ और्ध्वदैहिकंलोकांतरोपयोगिकर्म २ [illegible] [illegible] [illegible] [illegible]

अंत्यपिंडादाहादिकर्म ३ पापानां अपनुतिर्नाशस्तदर्थमितिहेतुरुक्तः ४ मृतौमरणेसति ५ ६ स्रग्भिः पुष्पमालादिभिर्मंडयेत् शवंभूषये-
त् तदुक्तंविष्णुपुराणे प्रेतदेहंशुभैःस्नानैःस्नापितंस्रग्विभूषितम् दग्ध्वाग्रामाद्बहिःस्नायादिति ७ संकल्पेन अमुकगोत्राय अमुकना



किंदत्तैर्बहुभिर्दानैःपित्रोरंत्येष्टिमाचरेत् तेनाग्निष्टोमसदृशंपुत्रःफलमवाप्नुयात् ३ तदाशोकंपरित्यज्यकारयेन्मुंड-
नंसुतः समस्तबांधवैर्युक्तःसर्वपापापनुत्तये ४ मातापित्रोर्मृतौयेनकारितंमुंडनंनहि आत्मजःसकथंज्ञेयःसं
सारार्णवतारकः ५ अतोमुंडनमावश्यंनखकक्षविवर्जितम् ततःसबांधवःस्नात्वाधौतवस्त्राणिधारयेत् ६
सद्योजलंसमानीयतत्तंस्नापयेत्शवम् मंडयेच्चंदनैःस्रग्भिर्गंगामृत्तिकयाथवा ७ नवीनवस्त्रैःसंच्छाद्यतदापिं
डंसदक्षिणम् नामगोत्रंसमुच्चार्यसंकल्पेनापसव्यतः ८ मृतकस्थानेशवोनामतस्यनाम्नाप्रदापयेत् तेनभूमि-
र्भवेत्तुष्टानदधिष्ठातृदेवताः ९

म्नेशवायब्रह्मदैवत्यस्थानपिंडोयंमयादीयतेतत्वोपतिष्ठतामिति ८ एवंहिद्वारिविश्रामेपांथः भूतनाम्नाविष्णुरुद्रदैवत्यंपिंडंदद्यादिति तेन-
स्थानपिंडेनतस्यशवस्य अधिष्ठातृदेवता आधारभूताभूमिस्तुष्टाभवेदितिकारणमुक्तम् ९ 

तेनद्वारपिंडेन भूतकोटिषु भूतानांगणनासमयेदुर्गताः दुष्टंअकल्पितस्थानंप्राप्तास्ते उपघातायविघ्नायनविघ्नोत्रसद्गतिमवरुध्यस्तवसमानंकारणंतत्कर्तुंनैव प्रभवंतीति १० ११ १२ १३ तेनभूतनाम्नातस्मैप्रेतायपिंडइत्यनुवर्त्तते संमार्ज्यभूमिंअभ्युक्ष्यजलेनसंस्नाप्यशवम् १४ तस्यप्रेतस्यहोत

द्वारदेशेभवेत्पांथस्तस्यनाम्नाप्रदापयेत् तेननैवोपघातायभूतकोटिषुदुर्गताः १० ततःप्रदक्षिणांकृत्वापूजनीयः स्नुषादिभिः स्कंधःपुत्रेणदातव्यस्तदान्यैर्वांधवैःसह ११ धृत्वास्कंधेस्वपितरंयःश्मशानायगच्छति सोश्वमेधफलं पुत्रोलभतेचपदेपदे १२ नीत्वास्कंधेस्वपृष्ठेंकेसदातातेनलालितः तदैवतदृणान्मुच्येत्मृतंस्वपितरंवहेत् १३ ततो धर्मार्गेविश्रामंसंमार्ज्याभ्युक्ष्यकारयेत् संस्नाप्यभूतसंज्ञायतस्मैतेनप्रदापयेत् १४ पिशाचाराक्षसायक्षायेचान्येदि- क्षुसंस्थिताः तस्यहोतव्यदेहस्यनैवायोग्यत्वकारकाः १५

व्यस्यहोतुंदग्धुंयोग्यस्यदेहस्य अयोग्यत्वकारकान अत्रपिंडदानंविनातन्मांसभक्षणमयोग्यत्वंयथोच्छिष्टंहविर्हवनायायोग्यंभवति तद्दे- हेपिताकं अतःपिशाचादयः पिंडंभुक्त्वा तन्मांसंभक्षणंनकुर्वंतीतिकारणमुक्तं इदमेवचितादौ १५

१६ संमार्ज्यभूमिंसंलिप्यगोमयेनवेदिकांलिप्तभूमिंउल्लिख्यतस्यांदर्भेणोर्ध्वरेखांकृत्वारेखामध्येनामिकांगुष्ठेनोत्थत्यजलेनाभ्युक्ष्यउपसमाधा- 
यतत्रवन्हिंसंस्थाप्यक्रव्यंमृतकस्यमांसं अतिभक्षतीति क्रव्यादस्तदेवसंज्ञानामयस्यतंदेवंवन्हिंपुष्पादिभिः संपूज्यलोमभ्यःस्वाहात्वग्भ्यःस्वा- 
हा २ मांसेभ्यःस्वाहाइत्याद्यनुवाक्येनवेदमंत्रेणविधिमनतिक्रम्येतियथाविधिहोमंकुर्यात् १८ हेक्रव्याददेवत्वमेवांते भूतानिपंचभूतात्मक-

ततोनीत्वाश्मशानेपुस्थापयेदुत्तरामुखम् तत्रदेहस्यदाहार्थंस्थलंसंशोधयेद्यथा १६ संमार्ज्यभूमिंसंलिप्योल्लि-
ख्योद्धृत्यचवेदिकाम् अभ्युक्ष्योपसमाधायवन्हिंतत्रविधानतः १७ पुष्पाक्षतैरथाभ्यर्च्यदेवंक्रव्यादसंज्ञकम् लो-
मभ्यस्त्वनुवाक्येनहोमंकुर्याद्यथाविधि १८ त्वंभूतभृज्जगद्योनि स्त्वंभूतपरिपालकः मृतःसंसारिकस्तस्मादेनं-
त्वंस्वर्गतिंनय १९

शरीराणिबिभर्षि स्वस्मिन्धारयसि इतिभूतभृदसि किंच त्वमेवजगतांयोनिः कारणंचासीः पंचमहाभू-
तांतर्गतत्वात्त्वमेवलोकस्यसर्वप्राणिजातस्यक्षुधासंदीपनेन भुक्तान्नपरिपाकेनपरिपालकोसि तस्माद्धेतोःसंसारिकः संसारेभवःमृत- 
श्चायंपुरुषस्त्वमेनंस्वर्गतिंनय प्रापयेतिप्रार्थना १९ ७ ७ ५ ९

२० चितायांमोक्षस्थापनंतत्प्रभृतिकंतदारभ्यसपिंडनात् प्राक्प्रेतत्वंभवति अनग्निचितायांशवहस्तेचसपिंडीपर्यंतंचप्रेतनाम्नैवप्रदातव्यं स्था
नादिषुशवपांथभूतनामभिरिति २१ पक्षांतरमाह केपीति प्रेतकल्पंअंत्येष्टिविधानंतद्विदःसाधकमप्याहुः अतस्तेनसाधकनाम्नावाकरे-
एवप्रेतनाम्नेति २२ यथादिक्पालादिबलिभिर्हविराहुतियोग्यंभवति तद्वत्पंचपिंडैःशवस्याहुतियोग्यतेति अन्यथापंचपिंडदानंविनातुउपघा

इतिसंप्रार्थयित्वाग्निंचितांतत्रैवकारयेत् श्रीखंडतुलसीकाष्ठैःपलाशाश्वत्थदारुभिः २० चितामारोप्यतंप्रेतंपिंडौहौ-
तत्रदापयेत् चितायांशवहस्तेच प्रेतनाम्नाखगेश्वर चितामोक्षप्रभृतिकंप्रेतत्वमुपजायते २१ केपितंसाधकं-
प्राहुःप्रेतकल्पविदोजनाः चितायांतेननाम्नावाप्रेतनाम्नाथवाकरे २२ इत्येवंपंचभिःपिंडैःशवस्याहुतियोग्य-
ता अन्यथाचोपघातायपूर्वोक्तास्तेभवंतिहि २३ प्रेतोदत्वापंचपिंडान् हुतमादायतंतृणैः अग्निंपुत्रस्ततोदद्या-
न्नभवेत्पंचकंयदि २४

तायस्वकुशलनाशायपूर्वोक्तभूतपिशाचादयोभवंतीति २३ पूर्वंलोमभ्यस्वाहेत्यनुवाक्येनहुतं-
नमेवाग्निंतृणैरादायपुत्रोदद्यादग्निंनिरग्निकानांतु अग्निहोत्रादादायदद्यादितिविशेषः २४ ७ ७ ७

[illegible] पंचके प्रेतदाह तृणकाष्ठसंग्रहं नकारयेदितिनिषेधात् २५ रेवतीअंतेयस्यतदेतत्पंचकं दाहे अ[illegible]

पंचकेषुमृतोयस्तुनगतिंलभतेनरः दाहस्तत्रनकर्त्तव्यःकृतेन्यमरणंभवेत् २५ आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपं 
चकम् रेवत्यंतंनदाहोर्हंदाहेचनशुभंभवेत् २६ गृहेहानिर्भवेत्तस्यऋक्षेष्वेषुमृतोहियः पुत्राणांगोत्रिणांचा
पिकश्चिद्विघ्नःप्रजायते २७ अथवाऋक्षमध्येहिदाहःस्याद्विधिपूर्वकः तद्विधिंतेप्रवक्ष्यामिसर्वदोषप्रशांतये २८
शवस्थनिकटेताश्चनिक्षिपेत्पुत्तलांस्तदा दर्भमयाश्चचत्वारऋक्षमंत्राभिमंत्रिताः २९ तमहेमप्रकर्त्तव्यंवहतिऋ
क्षनामभिः प्रेताजयतमंत्रेणपुनर्होमस्तुसंपुटैः ३० ततोदाहःप्रकर्त्तव्यस्तैश्चपुत्तलकैःसह सपिंडनदिनेकुर्यात्तस्य
शांतिविधिंसुतः ३१ तिलपात्रंहिरण्यंचरूप्यंरत्नंयथाक्रमम् घृतपूर्णकांस्यपात्रंदद्याद्दोषप्रशांतये ३२

र्हं योग्यं न २६ दाहेसतिशुभाभावएवाहगृहइति २७ विधिनातुपंचकेपिदाहःस्यादित्याह अथेति २८ विधिमेवाह शवेतिमंत्राः संहितायांज्ञात-
व्याः २९ प्रेताजयतानरइंद्रोवःशर्मयच्छतु इतिमंत्रेणसंपुटैःऋक्षनामभिर्होमः कार्यः ३० ३१ ३२

एवंशांतिविधानंतुकृत्वादाहंकरोतियः नतस्यविघ्नोजायेतप्रेतोयातिपरांगतिम् ३३ एवंपंचकदाहःस्यात्तद्विनाकेव-
लंदहेत् सतीयदिभवेत्पत्नीतयासहविनिर्दहेत् ३४ पतिव्रतायदानारीभर्त्तुःप्रियहितेरता इच्छेत्सहैवगमनंतदा-
स्नानंसमाचरेत् ३५ कुंकुमांजनसद्वस्त्रभूषणैर्भूषितांतनुम् दानंदद्याद्द्विजातिभ्योबंधुवर्गेभ्यएवच ३६ गुरूंनम-
स्कृत्यतदानिर्गच्छेत्स्वमंदिराद्बहिः ततोदेवालयंगत्वाभक्त्यातंप्रणमेद्धरिम् ३७ समर्प्याभरणंतत्रश्रीफलंपरिगृह्यच
लज्जांमोहंपरित्यज्यश्मशानभुवनंव्रजेत् ३८ तत्रसूर्यंनमस्कृत्यपरिक्रम्यचितांतदा पुष्पशय्यांतदारोहेन्निजांकेस्था
पयत्पतिम् ३९ सखिभ्यःश्रीफलंदद्यात्दाहमाज्ञापयेत्ततः गंगास्नानसमंज्ञात्वाशरीरंपरिदाहयेत् ४० नद-
ह्येद्गर्भिणीनारीशरीरंपतिनासह जनयित्वाप्रसूतिंचबालंपोष्यसतीभवेत् ४१ नारीभर्त्तारमासाद्यशरीरंदहते
यदि अग्निर्दहतिगात्राणिनैवात्मानंप्रपीडयेत् ४२

४३ दिव्यादौविवादेशपथादौ ४४ किंच अंतरात्मसतीजीवः मृतेनदेहरूपेणतुमरणंगतेन आत्मना अव्ययात्मस्वरूपेणचभर्त्रासहएकतांप्रा-
प्तएपुनर्नारीशरीरंनप्राप्नोतीत्यर्थः ४५ इममेवार्थंव्यतिरेकमुखेनद्रढयति यावदिति यावत्सतीनस्यात्तावत्स्त्रीत्वान्नमुच्यते किंतुसतीएवमु-

दह्यतेध्मायमानानांधातूनांचयथामलः तथानारीदहेत्पापंहुताशेह्यमृतोपमे ४३ दिव्यादौसत्ययुक्तश्चशुद्धोधर्म
युतोनरः यथानदह्यतेतप्तलोहपिंडेनकर्हिचित् ४४ तथासौपतिसंयुक्तादह्यतेनकदाचन अंतरात्मात्मनाभर्त्रामृ-
तेनैवत्वमागता ४५ यावच्चाग्नौमृतेपत्यौस्त्रीनात्मानंप्रदाहयेत् तावन्नमुच्यतेसाहिस्त्रीशरीरात्कथंचन ४६ तस्मा
त्सर्वप्रयत्नेनस्वपतिंसेवयेत्सदा कर्मणामनसावाचामृतेजीवतितद्गता ४७ मृतेभर्तरियानारीसमारोहेद्धुताश-
नम् सारुंधतीसमाभूत्वास्वर्गलोकेमहीयते ४८ तत्रसाभर्तृपरमास्तूयमानाप्सरोगणैः रमतेपतिनासार्द्धंयाव-
दिंद्राश्चतुर्दश ४९ मातृकंपैतृकंचैवयत्रसाचप्रदीयते कुलत्रयंपुनात्यत्रभर्तारंयानुगच्छति ५० तिस्रःकोट्योर्द्धको-
टीचयानिरोमाणिमानुषे तावत्कालंवसेत्स्वर्गेपतिनासहमोदते ५१

च्यतइत्यर्थः ४६ भर्तरिमृतेजीवतिचसति तद्गतातदनुग-
ताभवेत् ४७ महीयतेपूज्याभवति ४८ भर्तृपरमाभर्त्तुरपिशोभनरूपा ४९ अत्र अस्मिन्लोके ५० तिस्रःकोट्यइति अगणितानियावत्यःसिकताभूमेस्तावतीः
रद्दंस्मगाइतिवन ५१

रमणेनसहैकत्वंगतापितेनक्रीडतेइत्यत्र अहैतेचस्मितंस्फीतंनस्यादन्योन्यमीक्षणमितिवचनादहैतानंदादपिस्नेहानंदे अधिकस्सुखानुभावा त्पृथक्भूत्वारमतेइतिभावः भर्तृलोकेस्वर्गे ५२ किंच मुक्तापिलीलाविग्रहंकृत्वाभजंतेत्र भजनानंदस्याधिक्यंतथात्रापिस्नेहानंदस्याधिकत्वा त् रमणायस्वेच्छयैवविमलेकुलेजायतेनतुकर्मणाइति अन्यथासतीएवस्त्रीशरीरान्मुच्यतेनान्यइतिपूर्वोक्तवचनविरोधःस्यात् तंस्वपतिमेवल-

विमानेसूर्यसंकाशेक्रीडतेरमणेनसा यावदादित्यचंद्रौच भर्तृलोकेचिरंवसेत् ५२ पुनश्चिरायुःसाभूत्वाजायतेविमलेकुले पतिव्रतातुयानारीतमेवलभतेपतिम् ५३ याक्षणंदाहदुःखेनसुखमेतादृशंत्यजेत् सामूढाजन्मपर्यंतंदह्यतेविरहा- ग्निना ५४ तस्मात्पतिंशिवंज्ञात्वासहतेनदहेत्तनुम् यदिनस्यात्सतीतास्यतमेवंप्रदहेत्तदा ५५ अर्धेदग्धेथवापूर्णेस्फो टयेत्तस्यमस्तकम् गृहस्थानांतुकाष्ठेनयतीनांश्रीफलेनच ५६

भते नदुक्तंमाघे अतीवयोषित्प्रकृतिःसुनिश्चलापुमांसमभ्येतिभवांतरेष्वपीति ५३ अनुतप्याह याइति ५४ प्रासंगिकंपंचकसतीकृत्यंपरि- समाप्यप्रस्तुतदाहमेवानुसरति यदीति तंनरंएवंवक्ष्यमाणप्रकारेण ५५ स्फोटयेदत्रायमभिप्रायः हठयोगिनस्तुस्वेच्छयाब्रह्मरंध्रंभित्वाब्र- ह्मलोकंयांति कर्मयोगिनांतुपरतोभेदनेनपितृदेवलोकप्राप्तिर्भवति सन्यासिनांतुपूर्वंभित्वापश्चात् गंगायांतदलाभेभूमौवानिक्षिपेदिति ५६

५७ मंत्रमेवाह अस्मात् अकारात् अकारोवासुदेवःस्यात् इतिमंत्रकोशः अक्षराणामकारोस्मीतिश्रीभगवद्वचनाच्च हेपावक त्वंश्रीवासुदेवाज्जातोसि वाचांवन्हेर्मुखंक्षेत्रमितिस्मृत्युक्तेः किंच त्वत् त्वत्तःसकाशात् अयंजनः स्वर्गायलोकायस्वर्गलोकंप्रतिगंतुं पुनर्जायताम् तेजोमयदिव्यशरीरेणउत्पन्नोभवतु किंच अस्यै अस्यस्थूलदेहः स्वाहात्वयिहविरस्तु किंच ज्वालायामेवहविर्हूयते अतस्त्वंज्वलतुप्रज्वलितोभवेतिमंत्रार्थः

प्राप्तयेपितृलोकानांभित्वातद्ब्रह्मरंध्रकम् आज्याहुतिंततोदद्यान्मंत्रेणानेनतत्कृतः ५७ अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः असौस्वर्गायलोकायस्वाहाज्वलतुपावक ५८ एवमाज्याहुतिंदत्वातिलमिश्रांसमंत्रकाम् रोदितव्यंततोगाढंतेनतस्यसुखंभवेत् ५९ दाहादनंतरंकार्यंस्त्रीभिःस्नानंततःकृतैः तिलोदकंततोदद्यान्नामगोत्रोपकल्पितम्
६०

५८ एवमिति अर्धदग्धेतुमस्तकंस्फोटयेत् पूर्णदग्धेसत्याज्याहुतिंदद्याच्चेति तेनरोदनेनगुर्जराणांकुलव्यवहारपरमेतत् ५९ पूर्वंस्त्रीभिः ततस्त्रीभ्यः पश्चात्कृतादिभिरितिनामगोत्राभ्यांउपकल्पितंसंकल्पितम् अमुकगोत्रायामुकप्रेतायेदंतिलोदकंमद्दत्तंतवोपतिष्ठतामिति ६० ॥

प्राशयेत् चर्वयेत् शोकदिने मिष्टभोजनपरिहाराय पूर्वं कटु मुखं कुर्यादित्यभिप्रायः गुणान् कीर्तिकरान् यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीय-
ते तावत्कालं वसेत्स्वर्गे पूज्यमानः सुरासुरैरित्यभिप्रायः ६१ ६२ ६३ ६४ ६५ अत्र अस्मिन् पात्रे मिनं स्वल्पं हि इदं क्षीरं तु आहि भुंक्ष्व इदं नी-

प्राशयेन्निंबपत्राणि मृतकस्य गुणान्वदेत् स्त्रीजनोग्रे गृहे गच्छेत् पृष्ठतो नरसंचयः ६१ गृहे स्नानं पुनः कृत्वा गोग्रासं च
प्रदापयेत् पत्रावल्यां च भुंजीयात् गृहान्नं नैव भक्षयेत् ६२ मृतकस्थानमालिप्य दक्षिणाभिमुखं ततः द्वादशाहं क-
र्पयेत्तं दीपं कुर्यादहर्निशम् ६३ सूर्येस्तमागते तार्क्ष्ये श्मशाने वा चतुष्पथे दुग्धं च मृन्मये पात्रे तोयं दद्यादिनत्रयम्
६४ अपक्वमृन्मये पात्रे क्षीरनीरप्रपूरितम् काष्ठत्रये गुणैर्बद्धे धृत्वा मंत्रं पठेदिमम् ६५ श्मशानानलद-
ग्धोसि परित्यक्तोसि बांधवैः इदं नीरमिदं क्षीरमत्रस्नाहि मितं पिब ६६ चतुर्थे संचयः कार्यः साग्निकैश्च निरग्निकैः
तृतीयेह्नि द्वितीये वा कर्तव्यश्चावरोधतः ६७

रं च पिब ६६ चतुर्थदिने न दुक्तं विष्णुपुराणे चतुर्थेह्नि च कर्तव्यं भस्मास्थिचयनं नृप इति अवरोधतः चतुर्थदिने पंचकशनिवारादियोगात् ६७ ७५

संचपरिधानमेवाह गत्वेत्याद्येकादशभिः ६८ परिक्रमावामावर्त्तेनकुर्यात् ६९ संप्रोक्ष्यपूर्वंतु किंचिद्दुग्धेनसंप्रोक्ष्यउद्धरेत् चितास्थाना



गत्वास्मशानभूमिंचस्नानंकृत्वाशुचिर्भवेत् ऊर्णासूत्रंवेष्टयित्वापवित्रींपरिधायच ६८ दद्यात्श्मशानवासिभ्यस्त-
तोमाषबलिंसुतः यमायत्वेतिमंत्रेणतिस्रःकुर्यात्परिक्रमाः ६९ ततोदुग्धेनसंभ्युक्ष्यचितास्थानंखगेश्वर जलेनस-
मयेपश्चादुद्धरेदस्थिवृंदकम् ७० कृत्वापलाशपत्रेषुक्षालयेदुग्धवारिभिः संस्थाप्यमृन्मयेपात्रेश्राद्धंकुर्या-
द्यथाविधि ७१ त्रिकोणंस्थंडिलंकृत्वागोमयेनोपलेपितम् दक्षिणाभिमुखोदिक्षुदद्यात्पिंडत्रयंत्रिषु ७२
पुंजीकृत्यचिताभस्मतत्रधृत्वात्रिपादुकाम् स्थापयेत्तत्रसजलंमनाच्छाद्यमुखेघटम् ७३ ततस्तंडुलपाकेनदधि
घृतसमन्वितम् बलिंप्रेतायसजलंदद्यान्मिष्टंयथाविधि ७४ पदानिदशपंचैवचोत्तरस्यांदिशिव्रजेत् गर्त्तंवि
धायतत्रास्थिपात्रंसंस्थापयेत्खग ७५

निक्षाशयेत् ७० उपलेपितस्थलमेवस्थंडिलंभवति नचत्रिकोणंकृत्वा तत्रत्रिषुदक्षिणपश्चिमोत्तरासुदिक्षु ७१ ७२ ७३ ७४ ७५

गर्तपिंडाद्दाहस्यार्त्तिर्नश्यति मलिनषोडशस्यांगभूतोभवति ७६ ७७ ७८ गंगायां अस्थिपतनस्यमहिमानमाह अंतरित्यष्टभिः दशाह-

तस्योपरिततोदद्यात्पिंडंदाहार्त्तिनाशनम् गर्त्तादुद्धृत्यतत्पात्रंनीत्वागच्छेज्जलाशयम् ७६ तत्रप्रक्षालयेद्दुग्धंज-
लादस्थिपुनःपुनः चर्चयेच्चंदनेनाथकुंकुमेनविशेषतः ७७ धृत्वासंपुटकेतानिकृत्वाचहृदिमस्तके परिक्रम्यन-
मस्कृत्यगंगामध्येविनिक्षिपेत् ७८ अंतर्दशाहंयस्यास्थिगंगातोयेनिमज्जति नतस्यपुनरावृत्तिर्ब्रह्मलोकात्क-
दाचन ७९ यावदस्थिमनुष्यस्यगंगातोयेषुतिष्ठति तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ८० गंगाजलोर्मिसं-
स्पृश्यमृतकंपवनोयदा स्पृशतेपातकंतस्यसद्यएवविनश्यति ८१ अराध्यतपसोग्रेणगंगादेवींभगीरथः उद्धरा-
र्थंपूर्वजानामानयत्ब्रह्मलोकतः ८२ त्रिषुलोकेषुविख्यातंगंगायाःभवनंयशः यापुत्रान्सगरस्यैतान् भस्माख्यांन-
नयद्दिवम् ८३

नमध्येएवमहीयते पूज्योभवति ७९ तस्यामस्थिपतनप्रभावंतुकिंवर्ण्यते तज्जलकृतसंगपवनस्पर्शादपिकृतार्थोभवती-
त्याह गंगेति ८० गंगाजलस्य असाधारणतामाह ८१ ८२ यशएवाह याइति एतान् षष्टिसहस्रान्भस्माख्यानपिभस्मएवाख्यानामानियेषांतस्यावशेषानि-
त्यर्थः ८३

पतनात्पतनमात्रादेव ८४ अत्रइतिहासंकथयति कश्चिदितिद्वाभ्याम् ८५ अयंभावः अजामिलोयथा अविदितहरिनाममहिमापिकृतगनह
रिनामोच्चारणान्मुक्तः तथैवाधर्मपितञ्चरणादकादिति ८६ अतःगंगाएवमुक्तिप्रदाइतिहेतोः ८७ अथशास्त्रोक्तविधानांतरे अत्रपुनर्दाहिकं सिंहाव
लोकनेनाह यत्नयस्मिन्दिने शृणुयात् ततातस्मिन्नेवदिने पूर्ववत् पूर्वोक्तविधानेन पुत्तलं केवलं संदहेन्नतु काष्ठैःसमादायसम्यगस्थिसंचय

पूर्वेवयसिपापानियेकृत्वामानवामृताः गंगायामस्थिपतनात्स्वर्गलोकंप्रयांतिते ८४ कश्चित्व्याधोमहारण्येसर्व
प्राणिविहिंसकः सिंहेनर्निहितोयावत्प्रयातिनरकालये ८५ तावत्काकेनतस्यास्थिगंगायांपातितंतदा दिव्यंवि-
मानमारुह्यसगतोदेवमंदिरम् ८६ अतःस्वमेवसत्पुत्रोगंगायामस्थिपातयेत् अस्थिसंचयनांदूर्ध्वंदशगात्रंसमा-
चरेत् ८७ अथकश्चिद्दिदेशेसावनेचौरभयेमृतः नलब्धस्तस्यदेहश्चेत्शृणुयाद्यद्दिनेनदा ८८ नविधानेनादयकश्चित्पिष्टपु

नलकंकुर्यादितिपाठः तत्रायंविधिः यवपिष्टस्यसांगंहस्तमात्रं पुत्तलंविधायतन्नाभौ प्रज्वलितंदीपंनिधायप्राणप्रतिष्ठांकुर्यात् यथा अमुकगोत्रस्य प्रा-
णइहप्राणाः हंसःजीवइहस्थितोजीवः सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानिइहागत्यसुखंचिरंतिष्ठंतुस्वाहेति लेलि
हानमुद्रयानद्धृदयेविन्यसेत् ततोयावद्दीपःप्रज्वलतितावत्पूर्वंविष्णुस्मरणंकुर्यात् आतुरदानंचदद्यात् ततोदीपनिर्वाणेसतितंकाष्ठैःपूर्ववद्द
हेदिति ८८

८९ . ९० ९१ प्रसंगात्बालादीनांकृत्यमाह गंगेति ९२ अतःपरंसप्तविंशतिमासात्परम् ९३ गर्भेएवनष्टेमृतेसति क्रियादुग्ध दानादिकंनास्ति-
तस्यकिंचिदपिनदातव्यमित्यर्थः शिशुरादंतजननादिति स्मृतेर्दंतोत्पत्तिपर्यंतंशिशुरितिसंज्ञाबालस्या द्यावदाशिरवम् आशिरवंचूडाकर्मतृतीयव-

दर्भपुत्तलकंकृत्वापूर्ववनकेवलंदहेत् तस्यभस्मसमादायगंगांतोयेविनिक्षिपेत् ८९ दशगात्रादिकंकर्मतद्दिनादेवका-
रयेत् सएवदिवसोग्राह्यःश्राद्धेसांवत्सरादिके ९० पूर्णेगर्भेमृतानारीविदार्यजठरेतदा बालंनिष्काश्यनिक्षिप्यभूमौ-
तामेवदाहयेत् ९१ गंगातीरेमृतंबालंगंगायामेवपातयेत् अन्यदेशेक्षिपेद्भूमौसप्तविंशतिमासजम् ९२ अतःप-
रंदहेत्तस्यगंगायामस्थिनिक्षिपेत् जलंकुंभंचदातव्यंबालानामेवभोजनम् ९३ गर्भेनष्टेक्रियानास्तिदुग्धंदद्यंमृतेशि-
शौ घटंचपायसंभोज्यंदद्याद्बालविपत्तिषु ९४ कुमारेचमृतेबालान्कुमारानेवभोजयेत् सबालान्भोजयेद्विप्रान्
पौगंडेसव्रतेमृते ९५ मृतश्चपंचमादूर्ध्वमव्रतःसव्रतोपिवा पायसेनगुडेनापिपिंडान्दद्यात्दशक्रमात् ९६

र्षपर्यंतंबालइतिसंज्ञाविपत्तिषुमरणेषुघटादिकंदेयं बालेवातरुणेवृद्धे घटोभवतिचाक्षयइतिवचनात् ९४ आपंचवर्षात्कौमारः पौगंडोदशहायः-
नः अव्रतेबालान्सव्रतेविप्रान् ९५ पंचमाद्वर्षात् ऊर्ध्वंपौगंडावस्थायां अव्रतःउपवीतसंस्काररहितः सव्रतःसोपनीतः ९६ ७

महादानंशय्यादिकम् ९७ एकस्यनस्यैवोद्देशेनकृतंएकोद्दिष्टम् ९८ व्रतस्थानेव्रतबंधस्थानेउपवीतसंस्कारस्य अनधिकारात् देहेचाग्निसंस्कारे
सतिक्रियामपिस्वल्पांकुर्यात् ९९ १०० किशोरतरुणावस्थायांतुमृतेसतिसर्वमेवकृत्यंकरणीयमित्याह किशोरमितिकिशोरः षोडशसमप्राप्तो यो

एकादशंद्वादशंचवृषोत्सर्गविधिंविना महादानविहीनंचपौगंडेकृत्यमाचरेत् ९७ जीवमानेचपितरिनपौगंडेसपिंडन-
म् अतस्तस्यद्वादशाहस्येकोद्दिष्टंसमाचरेत् ९८ स्त्रीशूद्राणांविवाहस्तुव्रतस्थानेप्रकीर्तितः व्रतात्प्राक्सर्ववर्णानांव-
यस्तल्पाक्रियाभवेत् ९९ स्वल्पात्कर्मप्रसंगाच्चस्वल्पाद्विषयबांधवात् स्वल्पेवयसिदेहेचक्रियांस्वल्पामपीच्छति १००
किशोरेतरुणेकुर्यात्शय्यावृषमस्वादिकम् पददानंमहादानंगोदानमपिदापयेत् १ यतीनांचैवसर्वेषांनदाहोनोदक-
क्रिया दशगात्रादिकंतेषांनकर्तव्यंसुतादिभिः २ दंडग्रहणमात्रेणनरोनारायणोभवेत् त्रिदंडग्रहणात्तेषांप्रेतत्वं-
नैवजायते ३ वनमादिशेत् १ संन्यासिनांतुदाहादिकंकिमपिकृत्यंनकरणीयमित्याह यतीनामिति सर्वेषांहंसादिचतुर्विधानांतेषांस्वपितृ-
णामपिगृहस्थैरपिसुतादिभिर्दाहादिकंनकर्तव्यंकुटीचकंतुप्रदहेदिति प्राचीनैर्यदुक्तंतदयुक्तमित्याक्षिपन्नाह नदाहमिति यैःप्रैष्यमंत्रोच्चारण-
पूर्वकंसंन्यस्तंतेषांदाहादिकंसर्वशास्त्रेष्वविहितमेव २ ननुदशगात्रंविनाप्रेतत्वंस्यादितिचेन्मैवंमात्रेणेतिज्ञानेशून्येनापिसंन्यासिनांप्रेतत्वंनैवेति ३

किंच ज्ञानयुक्तेनसंन्यासेनतुजीवन्मुक्तविदेहत्वमेवभवतिइत्याह ज्ञानीति ४ अवश्यकर्त्तव्यतयातुनाचरेत् किंतुपितृभक्त्यैव ५ सन्यासिनांकृत्य
माह सन्यासस्तस्त्वमित्रपुत्रकलत्रबंध्वादीन् शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्माणिसन्यस्यदंडमाच्छादनकौपीनंचप्रैष्यमंत्रोच्चा
रणपूर्वकंपरिग्रहेदितिसन्यासोयस्यास्तीतिसन्यासी अस्यावस्थाभेदेनचातुर्विध्यंदर्शयति हंसमिति हंसस्तुयथा जातस्तथारूपधरोनिर्द्वंद्वो
निष्परिग्रहोब्रह्ममार्गेसम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थंपरेच्छयाभैक्ष्यमाहरन्नुदरमात्रेणलाभालाभसमः शुक्लध्यानपरोध्यात्मनि-

ज्ञानिनस्तुसदामुक्ताःस्वरूपानुभवेनहि अतस्तेषुयद्दतानांपिंडानांनैवकांक्षिणः ४ तस्मात्पिंडादिकंतेषांनतुनैोदनया
चरेत् तीर्थश्राद्धंगयाश्राद्धंपितृभक्त्यासमाचरेत् ५ हंसंपरमहंसंचकुटीचकबहूदकान् एतान्संन्यासिनस्तार्क्ष्यपृ-
थिव्यांस्थापयेन्मृतान् ६ एषचतुर्थभूमिकारूढः शुभाशुभकर्मनिर्मूलनपरः शून्यागारेदेवतागृहे तृणकुटवल्मीकवृक्षमूलकुलालशाला
ग्निहोत्रनदीपुलीनगिरिकुहरकंदर—कोटरनिर्झरस्थंडिलेष्वनकृतवासप्रयत्नोनिर्ममःसन्निवसतीतिहंसोनामेति १ परमहंसस्तुनदंडंकौ-
पीनंनचाच्छादनमाचरति विधिनिषेधातीतोयद्ब्रह्मवेदांतेषुपूर्णानंदैकबोधः परमात्मेतिनिरूपितस्तद्ब्रह्माहमस्मीत्येवंचतुर्थादिभूमिकासु-
सर्वदाभवन्नैवसप्तमभूमिकारूढोध्यातृध्येयविभागरहितोब्रह्मानंदविलीनवृत्तित्वाच्छरीरमपिनानुसंधत्ते एतदेवोक्तं श्रीमद्भागवते दे

हं भिन्नश्वरमवस्थितमुत्थितं वासिद्धो न पश्यति यतोध्यगमत्स्वरूपम् दैवादपेतमथ दैववशादुपेतं वासो यथा परिकृतं मदिरामदांधः इत्ययं योगी शी अ॰
तोष्णासुखदुःखमानापमान षड्रूम्यादिभिर्विवर्जितो भवति निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतादिकं नास्ति तत्प्रत्ययाभावात् यथा लीलायामासक्त १॰
स्य बालकस्याच्छादनादिरहितस्यापि हेमंतशिशिरयोः प्रातःकाले शीतं नास्ति तथा परमात्मन्यासक्तस्य योगिनः शीताद्यभावः अतः कृतकृत्यो-
भवति इति च स्मर्यते ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् इति परमहंसः २ अथ कुटीचकब-
हूदकौ विरक्तिभेदेन यथा अत्र विरक्तिस्त्रिधा तीव्रातीव्रतरा मंदा चेति तीव्रा यथा अस्मिन् जन्मनि मा भूवन्पुत्रदारादयो मम इति यास्थि
रा बुद्धिः सा वैराग्यस्य तीव्रता इति अस्मिन्वैराग्ये कुटीचक बहूदक सन्यासाधिकारः तथा चोक्तम् यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यास
द्वयं भवेत् कुटीचको बहूदश्चेदु भावेतौ त्रिदंडिनौ १ कुटीचकेरुक्तयात्राद्यशक्तः एकस्मिन्नेव तीर्थे संवसन् प्रत्यहं द्वादशसहस्रप्रणवज-
पं कुर्वन् यथोक्तकालभैक्ष्यमाहरन् महावाक्यार्थमवलोकयन्नात्मानुसंधानेन चित्तवृत्तिमवरोधयन् कुट्यां पर्णशालायां च क्वास्ति ब्रह्मध्या
नेन प्रकाशते इति कुटीचकः कुट्यामेव चरति यात्राद्यशक्तितया विचरतीति यद्वा चर गतिभक्षणयोरिति धातोः कुट्यां चरतीति भक्षयति
भिक्षान्नमिति कुटीचरो वा ३ बहूदकश्च तीर्थयात्रासु शक्तो ग्रामे त्वेकरात्रं नगरे त्रिरात्रं तीर्थे सप्तरात्रं निवसन् त्रिकालस्नानपरो मा १५
धुकरीं वृत्तिमाश्रितो निवासस्थानासक्तिरहितो निजाश्रमधर्मरतः प्रणवमनुस्मरन् दंडादिकं परिगृह्य पुनस्तीर्थान्तरं व्रजतीति बहून्युदका

मितीर्थजलाभिषस्येतिबहूदकइति ४ तीव्रतरवैराग्येतुहंसपरमहंससंन्यासाधिकारः तीव्रतरंयथापुनरावृत्तिसहितोलोकोमेमास्तुकश्चनइति-
तीव्रतरंस्यात् मंदेन्यासोनकोपिहीति १ मंदवैराग्येतुसंन्यासाधिकारएवनास्ति मंदायथापुत्रदाराधनादीनांनाशेनात्कालिकीमतिः धिक्संसा-
रमितीदृक्स्याद्विरक्तेमंदताहिसेति एतेषांविशेषलक्षणानिविश्वेश्वरीपद्धतौपरमहंसोपनिषदंजीवन्मुक्तेश्चविशेषतोनिरूपितानिअत्रतुविस्तरभ-

गंगादीनामभावेहिपृथिव्यांस्थापनंस्मृतम् यत्रसंतिमहानद्यस्तदातास्वेवनिक्षिपेत् १०७ इतिश्रीगरुडपुराणेसारोद्धा-
रेदाहास्थिसंचयकर्मनिरूपणोनामदशमोऽध्यायः १० गरुडउवाच दशगात्रविधिंब्रूहिकृतेकिंसुकृतंभवेत् पुत्रा-
भावेतुयःकुर्यादितिमेवदकेशव १ श्रीभगवानुवाच शृणुतार्क्ष्यप्रवक्ष्यामिदशगात्रविधिंतव यद्विधायचसत्पु-
त्रोमुच्यतेपैतृकादृणात् २ पुत्रःशोकंपरित्यज्यधृतिमास्थायसात्विकीम् पितुःपिंडादिकंकुर्यादश्रुपातंनकारयेत् ३

यान्नलिखितानि श्लोकार्थस्तुस्पष्टएव ६ १०७ इतिटीकायांदशमोऽध्यायः १० अस्थिसंचयनादूर्ध्वंदशगात्रंसमाचरेत् इतिश्रुत्वा-
खगः पूर्वंतदेवपरिपृच्छति १ एकादशेतिस्त्रोवाच शोकापनयनंवचः अप्रजपिंडदानारंदशगात्रविधिंहरिः २ सात्विकीधृतिर्गीतायांप्रोक्ता ध-
त्यायाधारयतेमनः प्राणेंद्रियक्रियाः योगेनाव्यभिचारिण्याधृतिः सापार्थसात्विकीति ३ ७ ७ ७

क्रियायामश्रुपातस्यनिषेधमाह श्लेष्मेति निरर्थकात् व्यर्थात् ४ नदेवाह यदीतिसमभिः निधनंगतःमृत्युंप्राप्तः ५ अपरिहार्येदूरीकर्तुमश-
शक्ये ६ उपायाभावादपिशोकोनोचितइत्याह नहीति ७ भावानांदुःखादीनांप्रतीकारः दूरीकरणोपायः ८ संयोगोविप्रयोगांतोमरणांतंहिजीवि-

श्लेष्माश्रुबांधवैर्मुक्तंप्रेतोभुंक्तेयतोऽवशः अतोन्नरोदितव्यंहितदाशोकान्निरर्थकात् ४ यदिवर्षसहस्राणि शोचतेहर्निशं-
नरः तथापिनैवनिधनंगतोदृश्येतकर्हिचित् ५ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच तस्मादपरिहार्येर्थेन-
शोकंकारयेद्बुधः ६ नहिकश्चिदुपायोस्तिदैवोवामानुषोपिवा योहिमृत्युवशंप्राप्तोजंतुःपुनरिहाव्रजेत् ७ अव-
श्यंभाविभावानांप्रतीकारोभवेद्यदि तदादुःखैर्नयुज्येरन्नलरामयुधिष्ठिराः ८ नायमत्यंतसंवासःकस्यचित्केनचित्स-
ह अपिस्वेनशरीरेणाकिमुतान्यैःपृथक्जनैः ९ यथाहिपथिकःकश्चिच्छायामाश्रित्यविश्रमेत् विश्रम्यचपुनर्गच्छेत्त
द्वद्भूतसमागमः १० यत्प्रातःसंस्कृतंभोज्यंसायंतच्चविनश्यति तदन्नरससंपुष्टेकायेकानामनित्यता ११

तमिमन्यायमाह नायमिति९ उक्तमेवार्थंदृष्टांतेनद्रढयति यथेति १० यस्यकारणमेवविनाशितदातत्कार्यस्यकाकथेत्याह यदिति संस्कृतंस्रगंधिद्रव्यैः
पाचितमपिक्लिश्यतिगतरसंभवति ११

भैषज्यं औषधं दुःखरोगनिवर्तकमित्यर्थः १२ शोकापनोदनोपायं निरूप्य पुत्राभावे तु कः कुर्यादिति प्रश्नस्योत्तरमाह पुत्रेति पंचभिः वधूः पत्नी पुत्र

भैषज्यमेतद्दुःखस्य विचारं परिचिंतय च अज्ञानप्रभवं शोकं त्यक्त्वा कुर्यात्क्रियां सुतः १२ पुत्राभावे वधूः कुर्याद्भार्याभावे च सोदरः शिष्यो वा ब्राह्मणस्यैव सपिंडो वा समाचरेत् १३ ज्येष्ठस्य वा कनिष्ठस्य भ्रातुः पुत्रैश्च पौत्रकैः दशगात्रादिकं कार्यं पुत्रहीनेन नरेखग १४ भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् १५ पत्न्यश्च बह्व्य एकस्य चैका पुत्रवती भवेत् सर्वास्ताः पुत्रवत्यः स्युस्तेनैकेन सुतेन हि १६ सर्वेषां पुत्रहीनानां मित्रः पिंडं प्रदापयेत् क्रियालोपो न कर्तव्यः सर्वाभावे पुरोहितः १७ स्त्री वाथ पुरुषः कश्चिदिष्टस्य कुरुते क्रियां अनाथप्रेतसंस्कारात्कोटियज्ञफलं लभेत् १८ पितुः पुत्रेण कर्तव्यं दशगात्रादिकं खग मृते ज्येष्ठेप्यतिस्नेहान्न कुर्वीत पिता सुते १९ बहवोपि यदा पुत्रा विधिमेकः समाचरेत् दशगात्रं सपिंडत्वं श्राद्धान्यन्यानि षोडश २०

च भ्राभावे सोदरः कनिष्ठभ्राता १३ भ्रातुः पुत्रेण सर्वभ्रातॄणां पुत्रमत्वं स्यादित्याह ज्येष्ठस्येति १४ एकजातानां एकस्मात् पितुः सकाशात् उत्पन्नानां मध्ये १५ सापत्नपुत्रेण स्त्रीणां पुत्रिता स्यादित्याह पत्न्य इति १६ १७ इष्टस्य मित्रस्य १८ १९ २०

२१ २२ कृतेकिंस्यात्कृतंभवेदितिप्रश्नस्योत्तरमाह समेतिद्वाभ्याम् २३ २४ दशगात्रविधिंब्रूहि इतिप्रश्नस्योत्तरमाह कूपइत्यादियाव

एकेनैवतुकार्याणिसंविभक्तधनेष्वपि विभक्तैस्तुपृथक्कार्यंश्राद्धंसांवत्सरादिकं २१ तस्मात्ज्येष्ठःसुतोभक्त्यादश-
गात्रंसमाचरेत् एकभोजीभूमिशायीभूत्वाब्रह्मपरःशुचिः २२ सप्तवारंपरिक्रम्यधरणींयत्फलंलभेत् क्रियांकृ-
त्वापितुर्मातुस्तत्फलंलभतेसुतः २३ आरभ्यदशगात्रंचयावद्वैवार्षिकंभवेत् तावत्पुत्रःक्रियांकुर्वन्गयाश्राद्ध-
फलंलभेत् २४ कूपेतडागेवारामेतीर्थेदेवालयेपिवा गत्वामध्यमयामेतुस्नानंकुर्यादमंत्रकं २५ शुचिर्भूत्वावृ-
क्षमूलेदक्षिणाभिमुखःस्थितः कुर्याच्चवेदिकांतत्रगोमयेनोपलिप्यतां २६ तस्यांपर्णंदर्भमयंस्थापयेत्कौशिकेद्वि
जं तंपाद्यादिभिरभ्यर्च्यप्रणमेदतसीतिच २७ तदग्रेचततोदत्वापिंडार्थंकौशमासनं तस्योपरिततःपिंडंनामगो-
त्रोपकल्पितम् २८ दद्यात्तंडुलपाकेनयवपिष्ठेनवासुतः उशीरंचंदनंभृंगराजपुष्पंनिवेदयेत् धूपंदीपंचनैवे-
द्यंमुखवासंचदक्षिणाम् २९ 

दध्यायसमाप्ति मध्यमयामेद्वितीयप्रहरेप्रथमयाममध्यान्हयोर्देवपितृसमयत्वात् अमंत्रकंसंकल्परहितम् २५ २६ पर्णेपर्णासने अतसीपुष्पसंकाशमितिमंत्रेणप्रणमेत् २७ कौशंदर्भासनम् २८ २९ ७

पयश्च पयश्च पयसी तयोर्नीरक्षीरयोः पात्रे ३० आनंत्यदायकम् अनंतफलदं भवतीत्यर्थः ३१ आदिदिनात् प्रथमदिनात् ३२ तेनैवान्नेन च

काकान्नंपयसोः पात्रे वर्द्धमानजलांजलीन् प्रेतायामुकनाम्नेच मद्दत्तमुपतिष्ठतु ३० अन्नं वस्त्रं जलं द्रव्य मन्यद्वा-
दीयतेचयत् प्रेतशब्देनयद्दत्तं मृतस्यानंत्यदायकम् ३१ तस्मादाद्दिनादूर्ध्वं प्राक् सपिंडीविधानतः योषितः पुरुष
स्यापि प्रेतशब्दं समुच्चरेत् ३२ प्रथमेऽहनि यत्पिंडो दीयते विधिपूर्वकम् तेनैव विधिनाऽन्नेन नवपिंडान्प्रदापये-
त् ३३ नवमे दिवसे चैव सपिंडैः सकलैर्जनैः तैलाभ्यंगः प्रकर्त्तव्यो मृतकस्वर्गकाम्यया ३४ बहिः स्नात्वा गृहीत्वा च
दूर्वालाजसमन्वितः अग्रतः प्रमदां कृत्वा समागच्छेन्मृतालयम् ३५ दूर्वावत्कुलवृद्धिः स्तेलाजाइव विकाशता ए-
वमुक्त्वा त्यजेद्गेहे लाजान्दूर्वासमन्वितान् ३६ दशमेऽहनि मांसेन पिंडं दद्यात् खगेश्वर माषेनतन्निषेधाद्वा कलौ-
नपलपैतृकम् ३७

रूपायसादिनाचनवदिनेषु नवपिंडान् ३३ नवमदिनस्य कृत्यं कथयति नवमे इति त्रि-
भिः ३४ ३५ ३६ दशमदिने विशेषमाह दशमदिन इति वा अथवा कलौ कलियुगे पलेन मांसेन मिनृश्राद्धं न भवतीति तस्य मांसपिंडस्य निषेधा-
न्माषेनैव दद्यादित्यर्थः अत्र अतो ह्यामिषवर्ज्यस्य क्षुधा तस्य न शाम्यतीति प्राचीनेस्त्वावश्यकत्वे नैवोक्तं तदन्ययुगाभिप्रायेणेति ३७ ९

दशमेदिवसेक्षौरमिति द्वितीयश्लोकः स्मृत्यंतरदेशांतरधर्मानुसारेण ३८ ३९ ४० अतसीति कलिन्दककोमलश्यामसुंदरम् ४१

दशमेदिवसेक्षौरेबांधवानांसमुंडनम् क्रियाकर्त्तुःकृतस्यापिपुनर्मुंडनमाचरेत् ३९ मिष्टान्नैर्भोजयेदेकंदिनेषु-
दशकद्विजम् प्रार्थयेत्प्रेतमुक्तिंचहरिंध्यात्वाकृतांजलिः ४० अतसीपुष्पसंकाशंपीतवाससमच्युतम् येनम-
स्यंतिगोविंदंनतेषांविद्यतेभयम् ४१ अनादिनिधनोदेवःशंखचक्रगदाधरः अक्षयःपुंडरीकाक्षप्रेतमोक्षप्रदोभव
४२ इतिसंप्रार्थनामंत्रंश्राद्धांतेप्रत्यहंपठेत् स्नात्वागत्वागृहेदत्वागोग्रासंभोजनंचरेत् ४३ इतिश्रीगरुडपुरा-
णेसारोद्धारेदशगात्रविधिनिरूपणोनामैकादशोऽध्यायः ११ गरुडउवाच एकादशदिनस्यापिविधिंब्रूहिसुरे-
श्वर वृषोत्सर्गविधानंचवदमेजगदीश्वर १ श्रीभगवानुवाच एकादशाह्निगंतव्यंप्रातरेवजलाशये और्ध्वदे
हिक्रियासर्वाकरणीयाप्रयत्नतः २ निमंत्रयेद्ब्राह्मणांश्चवेदशास्त्रपरायणान् प्रार्थयेत्प्रेतमुक्तिंचनमस्कृत्यकृतां
जलिः ३ ४ हेपुंडरीकाक्षदेवः त्वंअनादिनिधनोऽसि अतोमोक्षप्रदोभवेति ४२ ४३ इतिटीकायांएकादशोऽध्यायः
११ कृत्यमेकादशाहस्यलक्षणानिवृषस्यच तदुत्सर्गफलंचैवद्वादशेप्राहमाधवः १ १ २ ३ ४ ५

४ ५ ६ ७ ८ ९ १० ११ १२ १३ उपभुक्तंतस्यशरीरलग्नम् नदी-

स्नानसंध्यादिंकंकृत्वास्याचार्योऽपिशुचिर्भवेत् विधानंविधिवत्कुर्यादेकादशदिनोचितम् ४ अमंत्रंकारयेच्छ्राद्धंद-
शाऽहंनामगोत्रतः एकादशेऽह्निप्रेतस्यदद्यात्पिंडंसमंत्रकम् ५ सौवर्णंकारयेद्विष्णुंब्रह्माणंरौप्यकंतथा रुद्रंताम्रम-
यंकार्यंयमंलोहमयंखग ६ पश्चिमेविष्णुकलशंगंगोदकसमन्वितम् तस्योपरिन्यसेद्विष्णुंपीतवस्त्रेणवेष्टित-
म् ७ पूर्वेतुब्रह्मकलशंक्षीरोदकसमन्वितम् ब्रह्माणंस्थापयेत्तत्रश्वेतवस्त्रेणवेष्टितम् ८ उत्तरस्यांरुद्रकुं-
भंपूरितंमधुसर्पिषा श्रीरुद्रंस्थापयेत्तत्ररक्तवस्त्रेणवेष्टितम् ९ दक्षिणस्यांयमघटमिंद्रोदकसमन्वितम् कृष्ण
वस्त्रेणसंवेष्ट्यतस्योपरियमंन्यसेत् १० मध्येतुमंडलंकृत्वास्थापयेत्कौशिकेस्रुतः दक्षिणाभिमुखोभूत्वाऽप-
सव्येनचतर्पयेत् ११ विष्णुंविधिंशिवंधर्मंवेदमंत्रैश्चतर्पयेत् होमंकृत्वाचरेत्पश्चाच्छ्राद्धंदशघटादिकम् १२
गोदानंचततोदद्यात्पितृणांतारणायवै गौरेषाहिमयादत्ताप्रीतयेतेऽस्तुमाधव १३ उपभुक्तंतुतस्यासीद्वस्त्रभूषण-
वाहनम् घृतपूर्णंकांस्यपात्रंसप्तधान्यंतदीप्सितम् १४ प्सितंतस्यवांछितंच एतद्वस्त्रादिसर्वं १४ ५ ७

१५ प्रेतस्यशय्यायादानविधिमाह प्रक्षाल्येतिचतुर्भिः १६ १७ १८ १९ २० २१ ब्राह्मणादिवर्णानामसाधारणवृष-



तिलाद्यष्टमहादानमंतकालेनचेत्कृतम् शय्यासमीपेधृत्वैतद्दानंतस्याःप्रदापयेत् १५ प्रक्षाल्यविप्रचरणौपूजयेदंबरादिभिः सिद्धान्नंतस्यदातव्यंमोदकाःपूपकापयः १६ स्थापयेत्पुरुषंहैमंशय्योपरितदास्ततः पूजयित्वाप्रदातव्यामृतशय्यायथोदिता १७ प्रेतस्यप्रतिमायुक्तासर्वोपकरणैर्वृता प्रेतशय्यामयाह्येषातुभ्यंविप्रनिवेदिता १८ इत्याचार्यायदातव्याब्राह्मणायकुटुंबिने ततःप्रदक्षिणीकृत्यप्रणिपत्यविसर्जयेत् १९ एवंशय्याप्रदानेनश्राद्धेननवकादिना वृषोत्सर्गविधानेनप्रेतोयातिपरांगतिम् २० एकादशेऽह्निविधिनावृषोत्सर्गंसमाचरेत् हीनांगंरोहिणंबालंत्यक्त्वाकुर्यात्सलक्षणम् २१ रक्ताक्षःपिंगलोयस्तुरक्तःशृंगेगलेखुरे श्वेतोदरःकृष्णपृष्ठोब्राह्मणस्यविधीयते २२ सुस्निग्धवर्णोयोरक्तःक्षत्रियस्यविधीयते पीतवर्णश्चवैश्यस्यकृष्णःशूद्रस्यशस्यते २३

स्यलक्षणान्याह रक्ताक्षइतिद्वाभ्याम् २२ शस्यते विहितोभवति २३ ५ ५ ५ ५

सर्ववर्णसाधारणंवृषंकथयति यइत्यादिषड्भिः २४ पंचप्रकारंनीलंवृषंदर्शयति किंतूक्तलक्षणस्यैवेत्याह चरणाइति गोपतेःवृषस्य-
२५ २६ २७ २८ २९ उक्तलक्षणोवृषोगृहेनधार्यः तंभारवाहकंनकुर्यादित्यर्थः यथाकपिलागौर्ब्राह्म

यस्तुसर्वांगपिंगःस्यात्श्वेतःपुच्छेपदेषुच सपिंगोवृषइत्याहुःपितृणांप्रीतिवर्धनः २४ चरणास्तुमुखंपुच्छंय-
स्यश्वेतानिगोपतेः लाक्षारससवर्णोयस्तंनीलमितिकीर्तितम् २५ लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः
पिंगःखुरविषाणाभ्यांरक्तनीलोनिगद्यते २६ सर्वांगेष्वेकवर्णोयःपिंगःपुच्छेखुरेषुयः तंनीलपिंगमित्याहुःपूर्व
जोद्धारकारकम् २७ पारावतसवर्णस्तुललाटेतिलकान्वितः तंवभ्रुनीलमित्याहुःपूर्णसर्वांगशोभनम् २८
नीलःसर्वशरीरेषुरक्तश्चनयनद्वये तमप्याहुर्महानीलंनीलःपंचविधःस्मृतः २९ अवश्यमेवमोक्तव्योनसधा-
र्योगृहेभवेत् तदर्थमेषाचरतिलोकेगाथापुरातनी ३०

णातिरिक्तवर्णैर्गृहेधार्यानभवति किंतु दातव्याएव तथैवायमप्यवश्यंमोक्तव्यएवेति तदर्थएतस्मिन्नेवार्थेपुरातनीसर्वशास्त्रप्रसिद्धा
गाथास्मृतिश्चरति लोकेविख्यातिं याति ३० ७ ७ ७ ५

तामेवाह इष्टव्यावांछितव्याः ममबहवःपुत्राःसंत्वितीच्छाकर्त्तव्येत्यर्थः ननु किमर्थमितिचेत्तत्राह यदीति बहुष्वेकोपिगयांगच्छेत् एकः प्र-
५१ गौरीमष्टवर्षांकन्यांच नीलमुक्तलक्षणमोचयेदितिहेतोः एकएवेनैत्तदाग्रहकार्यएवन्ययोभवेत् नस्यगयादिपितृमुक्तिकृत्येव सराभावादि- ५१

इष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेत् गौरींविवाहयेत्कन्यांनीलंवावृषमुत्सृजेत् ३१. सएवपुत्रोमंतव्योवृषोत्स
र्गंतुयश्चरेत् गयायांश्राद्धदातान्चयोऽन्योविष्ठासमःकिल ३२ रौरवादिषुयेकेचित्पच्यंतेयस्यपूर्वजाः वृषोत्सर्गे-
पातान्सर्वान्तारयेदेकविंशतिं ३३ वृषोत्सर्गंकिलेच्छंतिपितरःस्वर्गताअपि अस्मद्वंशेसुतःकोऽपिवृषोत्सर्गंकरिष्यति
३४ तदुत्सर्गाद्वयंसर्वेयास्यामःपरमांगतिम् सर्वयज्ञेषुचास्माकंवृषयज्ञोहिमुक्तिदः ३५ तस्मात्पितृविमुक्त्यर्थंवृष-
यज्ञंसमाचरेत् यथोक्तेनविधानेनकुर्यात्सर्वप्रयत्नतः ३६ ग्रहाणांस्थापनंकृत्वातत्तन्मंत्रैश्चपूजनम् होमंकुर्याद्यथा
शास्त्रंपूजयेद्वृषमातरः ३७ वत्संवत्सींसमानाय्यबन्धीयात्कंकणंतयोः वैवाह्येनविधानेनस्तंभमारोपयेत्तदा ३८

तिभावः ३१ अन्यःवृषोत्सर्गाद्यकर्त्ताइत्यकरणेऽपमानोक्तिः ३२ करणेतु केवलंपितुरेव मुक्तिर्नकिंतु सर्वपितॄणामेवेत्याह रौरवादिष्विति ३३ स्वर्गताः ५१
स्वर्गेस्थिताअपिइच्छंतिपरमगतिप्राप्त्यर्थं ३४ ३५ सर्वप्रयत्नतःयदिदेशेनास्तितदादेशांतरादप्यानीयकर्त्तव्यएवेत्यर्थः ३६ विधानमाहग्रहाणामि-
तिसप्तभिः ३७ ३८

३९ ४० धर्मइतिवृषरूपाद्यमितिवृषरूपोहिभवतीति उत्सर्गस्यागएवप्रदानमथोदनंतवानवाभयदानेनतारयस्व ममपितृनितिशेषः ४१ ४२

स्नापयेच्चवृषंवत्सींरुद्रकुंभोदकेनच गंधमाल्यैश्चसंपूज्यकारयेच्चप्रदक्षिणाम् ३९ त्रिशूलंदक्षिणेपार्श्वेवामेचक्रंप्रदापयेत् तंविमुच्यांजलिंबध्वापठेन्मंत्रमिमंसुतः ४० धर्मस्त्वंवृषरूपेणब्रह्मणानिर्मितःपुरा तवोत्सर्गप्रदानेनतारयस्व भवार्णवात् ४१ इतिमंत्रान्नमस्कृत्यवत्सवत्सींसमुत्सृजेत् वरदोऽहंसदातस्यप्रेतमोक्षंददामिच ४२ तस्मादेषप्रकर्त्तव्यस्तत्फलंजीवतोभवेत् अपुत्रस्तुस्वयंकृत्वासुखंयातिपरांगतिम् ४३ कार्तिकादौशुभेमासेचोत्तरायणगेरवौ शुक्लपक्षेऽथवाकृष्णेद्वादश्यादितिथौतथा ४४ ग्रहणद्वितयेचैवपुण्यतीर्थेऽयनद्वये विषुवद्वितयेचापिवृषोत्सर्गंसमाचरेत् ४५ शुभलग्नमुहूर्त्तेचशुचौदेशेसमाहितः ब्राह्मणंतुसमाहूयविधिज्ञंशुभलक्षणम् ४६ जपैर्होमैस्तथादानैःप्रकुर्याद्देहशोधनम् पूर्ववत्सकलंकृत्यंकुर्याद्धोमादिलक्षणम् ४७ शालिग्रामंचसंस्थाप्यवैष्णवंश्राद्धमाचरेत् आत्मश्राद्धंततःकुर्याद्दद्याद्दानंद्विजन्मने ४८

मृतस्यपुत्रहस्तेनसत्फलंभवति तदेवजीवस्यस्वहस्तकृतेनाप्यस्ति ४३ अतस्तद्विधानमप्याह कार्तिकादाविति पंचभिः विषुवद्वितयेमेषतुलासंक्रांतिदिने ४४ ४५ ४६ ४७ ४८

४९ ५० सर्वपापानांप्रायश्चित्तरूपमप्येतदेवेत्याह बाल्येति द्वाभ्याम् ५१ ५२ ५३ बहुतरसत्कृतश्रवणोत्सकतया सौभाग्यवत्याः
सपुत्रायाःस्त्रियश्चनकुर्यादित्याह पतीति किंच पतिपुत्रवतीत्यनेनैवंविधस्त्रयाश्चकुर्यादित्यवगम्यते तथापिवृषयज्ञंसमाचरेदित्यादिव

एवंयःकुरुतेपक्षिन्नपुत्रश्चापिपुत्रवान् सर्वकामफलंतस्यवृषोत्सर्गात्प्रजायते ४९ अग्निहोत्रादिभिर्यज्ञैर्दानैश्च
विविधैरपि नतांगतिमवाप्नोतिवृषोत्सर्गेणयांलभेत् ५० बाल्यकौमारपौगंडेयौवनेवाद्धकेकृतम् यत्पापंत-
द्विनश्येतवृषोत्सर्गान्नसंशयः ५१ मित्रद्रोहीकृतघ्नश्चस्करापोगुरुतल्पगः ब्रह्महाहेमहारीचवृषोत्सर्गात्प्र-
मुच्यते ५२ तस्मात्सर्वप्रयत्नेनवृषयज्ञंसमाचरेत् वृषोत्सर्गसमंपुण्यंनास्तिताक्ष्येजगत्त्रये ५३
पतिपुत्रवतीनारीद्वयोरग्रेमृतायदि वृषोत्सर्गंनैवकुर्याद्द्याद्गांचपयस्विनीम् ५४

चनाद्वृषोत्सर्गस्यापियज्ञमयत्वात्तस्मिन् स्त्रीशूद्राणामधिकारएवेतिकश्चित् अतोऽत्रदेशकुलपरंपरागतधर्मानुसारेणकर्तव्यम् ५४

एवं वृषोत्सर्गंनिरूप्यमलिनादिषोडशत्रयमाह स्थानेइत्यादियावदध्यायसमाप्ति ५५ ५६ ५७ ५८ ५९

वृषभंवाहयेद्यस्तुस्कंधेपृष्ठेचखेचर सपतेन्नरकेघोरेयावदाभूतसंप्लवम् ५५ वृषभंताडयेद्यस्तुनिर्दयोमुष्टि-
यष्टिभिः सनरःकल्पपर्यंतंभुंजतेयमयातनाम् ५६ एवंकृत्वावृषोत्सर्गंकुर्यात्श्राद्धानिषोडश सपिंडीकरणा
दर्वाक्तदहंकथयामिते ५७ स्थानेद्वारेऽर्धमार्गेचचितायांशवहस्तके अस्थिसंचयनेषष्ठोदशपिंडादशाह्नि-
काः ५८ मलिनंषोडशंचैतत्प्रथमंपरिकीर्तितम् अन्यच्चषोडशंमध्येद्वितीयंकथयामिते ५९ प्रथमंविष्णवे-
दद्याद्द्वितीयंश्रीशिवायच याम्यायपरिवारायतृतीयंपिंडमुत्सृजेत् ६० चतुर्थंसोमराजायहव्यवाहायपंचम
म् कव्यवाहायषष्ठंचदद्यात्कालायसप्तमम् ६१ रुद्रायचाष्टमंदद्यान्नवमंपुरुषायच प्रेतायदशमंचैवैकाद-
शंविष्णवेनमः ६२ द्वादशंब्रह्मणेदद्याद्विष्णवेच्चत्रयोदशम् चतुर्दशशिवायैववयमायदशपंचकम् ६३

६० ६१ ६२ ६३

६४ ६५ ६६ ६७ ६८ ६९ ७० संपरेतस्यमृतस्य और्ध्वदैहिकंलोकांतरोपयोगि पिंडदानादिकंक्षयाहंवार्षिकं तथान्च

दद्यात्तत्पुरुषायैवपिंडंषोडशकंखग मध्यंषोडशकंप्राहुरेतत्तत्वविदोजनाः ६४ द्वादशप्रतिमासेषुपाक्षिकंच
त्रिपाक्षिकम् न्यूनषाण्मासिकंपिंडंदद्यान्न्यूनाब्दिकंतथा ६५ उत्तमंषोडशंचैतन्मयातेपरिकीर्तितम् अपथि-
त्वत्कृतास्यर्कुर्यादेकादशेहनि ६६ चत्वारिंशत्तथैवाष्टौश्राद्धंप्रेतत्वनाशनम् यस्यजातंविधानेनसभवेत्पितृपंक्ति
भाक् ६७ पितृपंक्तिप्रवेशार्थंकारयेत्षोडशत्रयम् एतत्श्राद्धविहीनश्चेत्प्रेतोभवतिसस्थिरम् ६८ याव-
न्नदीयतेश्राद्धंषोडशत्रयसंज्ञकम् स्वदत्तंपरदत्तंचतावन्नैवोपतिष्ठते ६९ तस्मात्पुत्रेणकर्त्तव्यंविधिनाषो-
डशात्रयम् भर्त्तुर्वाकुरुतेपत्नीतस्यश्रेयोह्यनंतकम् ७० संपरेतस्ययापत्न्यःकुरुतेचौर्ध्वदैहिकम् क्षयाहं
पाक्षिकश्राद्धंसासतीत्युच्यतेमया ७१ उपकारायसाभर्त्तुर्जीवत्येषापतिव्रता जीवितंसफलंतस्यायामृतंस्वा-
मिनंभजेत् ७२ स्मृतिः मासपक्षतिथिस्पष्टेयोयस्मिन्म्रियतेहनि प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुः पाक्षिकंतुआश्विने- ६१
मासिकन्यागतेवानागतेरवौ कृष्णपक्षेकृतंश्राद्धंपाक्षिकंतद्विधीयते इतियापत्नीकुरुतेसाऽपिसतीएव ७१ ७२ ५

नतुशास्त्रवशेनवत्यादौभमृतानांनारायणबलिःकार्याक्रियामासदाभवात अतस्तामेवकुर्यात् सर्पान्मृतानांचसर्पपूजनंकर्तव्यमित्याह अ-
थेत्यादिषड्भिः अथशब्दोविधानांतरे प्रमादेनअनवधानेनसंस्कारप्रमुखंदाहादिकंसर्वंपूर्वोक्तंकर्म ७३ ७४ ७५ ७६ ७७ ७८ एवमितिआब्दं

अथकश्चित्प्रमादेनम्रियतेवन्हिवारिभिः संस्कारप्रमुखंकर्मसर्वंकुर्याद्यथाविधि ७३ प्रमादादिच्छयावापिनागाद्वा-
म्रियतेयदि पक्षयोरुभयोर्नागंपंचमीषुप्रपूजयेत् ७४ कुर्यात्पिष्टमयींलेखांनागभोगाकृतिंक्षवि अर्चयेत्तांसि
तैःपुष्पैःस्रग्गंधैश्चंदनेनच ७५ प्रदद्याद्धूपदीपौचतंडुलांश्चतिलानक्षिपेत् आमपिष्टंचनैवेद्यंक्षीरंचापिनिवेदयेत्
७६ सौवर्णशक्तितोनागंगांचदद्याद्द्विजन्मने कृतांजलिस्ततोब्रूयात्प्रीयतांनागराडिति ७७ पुनस्तेषांप्रकुर्वीत-
नारायणबलिक्रियाम् तयालभंतेस्वर्वासंमुच्यंतेसर्वपातकैः ७८ एवंसर्वंक्रियांकृत्वाघटंसान्नंजलान्वितम् द-
द्यादाब्दंयथासंख्यान्पिंडान्वासजलान्क्रमात् ७९ एवमेकादशेकृत्वाकुर्यात्सापिंडनंततः शय्यापदानांदानंचका
रयेत्सूतकेगते ८० इति०ग० एकादशविधिनिरू० द्वादशोध्यायः १२ आअब्दं इतिच्छेदः अब्दपर्यंतमित्यर्थः प्रत्यहंघटंदद्यादितिवा-
अथवायथासंख्यान्षष्ठ्युत्तरशतत्रयसंख्याकान्सजलान्नजलांजलिसहितान्क्रमात्पाक्षिकस्यपंचदशमासिकस्यत्रिंशत्पुनःसार्द्धमासिकस्यपंचदशइत्यादि
क्रमेणैवैकादशेऽन्हि पिंडानेवदद्यादित्यर्थः ७९ ८० इतिटीकायांद्वादशोऽध्यायः १२

सपिंडीकरणशय्यायाःपदानांदानमेवच तत्सामग्रीफलंतेषांहरिःआहत्रयोदश १ तेषांशय्यादीनांमहिमांदानफलंब्रूहीति १ ययासपिंडनादिक्रिय-
या २ पितामहाएवशिवादयःवसुरुद्रादित्यस्वरूपास्तेषु ३ ४ ५ विप्रस्यैतद्द्वादशाहंराजन्यस्याप्यशौचकम् इतिविष्णुपुराणवचनाद्ब्राह्मणस्य



गरुडउवाच सपिंडनविधिंब्रूहिसूतकस्यचनिर्णयम् शय्यापदानांसामग्रींतेषांचमहिमांप्रभो १ श्रीभगवानुवाच
शृणुतार्क्ष्यप्रवक्ष्यामिसपिंड्याद्यखिलांक्रियाम् प्रेतनामपरित्यज्ययत्यापितृगणेविशेत् २ नपिंडोमिलितोयेषांपि-
तामहशिवादिषु नोपतिष्ठंतिदानानिपुत्रैर्दत्तान्यनेकधा ३ अशुद्धःस्यात्सदापुत्रोनशुद्ध्यतिकदाचन सूतकंननि
वर्त्तेतसपिंडीकरणंविना ४ तस्मात्पुत्रेणकर्त्तव्यंसूतकांतेसपिंडनम् सूतकंतेप्रवक्ष्यामिसर्वेषांचयथोचितम् ५
ब्राह्मणस्तुदशाहेनक्षत्रियोद्वादशेऽहनि वैश्यःपंचदशाहेनशूद्रोमासेनशुद्ध्यति ६ दशाहेनसपिंडास्तुशुद्ध्यंतिप्रे-
तसूतके त्रिरात्रेणसकुल्यास्तुस्नात्वाशुद्ध्यंतिगोत्रजाः ७ चतुर्थेदशरात्रंस्यात्षण्निशाःपुंसिपंचमे षष्ठेचतुरहःप्रो
क्तसप्तमेचदिनत्रयम् ८ पित्द्वादशाहंसूतकम् ६ सपिंडाश्चतुःपुरुषावधयःसकुल्याःसप्तपुरुषावधयः गोत्रजाःदशपुरुषावधयः ७ ६२
एतदेवविशेषेणनिरूपयतिचतुर्थेपुंसिवृद्धप्रपितामहकुलोत्पन्नेसपिंडपुरुषेदशरात्रंसूतकम् पुंसिसूतकंचेति सर्वत्रैवंयोज्यम् ८ ७

९ अहर्निशंदशदिनमध्येएव १० दशाहे अतिक्रांतेव्यतीतेसति संवत्सरात्प्राक्त्रिरात्रंसूतकम् दशाहमितिसपिंडीपर्यंतंज्ञातव्यंतावित्रासंध्या
वंदनादीनामनधिकारात् ११ ननुप्रथमसूतकेदैवाद्द्वितीये आगते सति किंकर्त्तव्यमित्यत आह आद्येति चतुर्भागस्यत्रिभिर्दिनैरेकोविभागःघ-
ट्भिश्चाद्यभागद्वयंतत्रप्राङ्मृतस्यषट्दिनमध्येद्वितीयेमृतेसति आद्येनसहैवद्वितीयस्यापिदशगात्रादिकंसपिंडनंचकर्त्तव्यं षट्दिनादूर्ध्वंमृ

अष्टमेदिनमेकंतुनवमेप्रहरद्वयम् दशमेस्नानमात्रंहिमृतकंजन्मसूतकं ९ देशांतरगतःकश्चिच्छृणुयाद्योह्यह-
र्निशम् यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेत् १० अतिक्रांतेदशाहेतुत्रिरात्रमशुचिर्भवेत् संवत्सरेव्यतीतेतु-
स्नानमात्राद्विशुद्ध्यति ११ आद्यभागद्वयंयावन्मृतकस्यचसूतके द्वितीयेपतितेचाद्यात्सूतकाच्छुद्धिरिष्यते १२ आ
दंतजननात्सद्यआचौलान्नैशिकीस्मृता त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम् १३ आजन्मनस्तुचौलांतंयत्रकन्या
विपद्यते सद्यःशौचंभवेत्तत्रसर्ववर्णेषुनित्यशः १४ तेनसहद्वितीयस्यसपिंडनादिकमितितात्पर्यार्थः १२ आदंतजननाद्दंतोद्भवात्प्राक्सद्यः
स्नानमात्राच्छुद्धिः चूडाकरणादाचूडात्प्राक्नैशिकीएकरात्रेणशुद्धिः आव्रतादेशाद्व्रतबंधनात्प्राक्त्रिरात्रंसूतकम् अतःपरंउपवीतसंस्कारादनं
तरम् १३ कन्यानांसूतकमाह चौलांतंसप्तविंशतिमासपर्यंतंयत्रयदाविपद्यतेम्रियते १४ ७ ७ ७

वाग्दानाद्यागेकदिनंसूतकंअतःपरंवाक्प्रदानादनंतरंप्रवृद्धानांवयसाधिकानांचत्रिरात्रंचेतिवाक्प्रदानंनामभाषायांसगाईत्युच्यते १५ एतदेव- 
निवृणोति वागिति उभयतः पितुर्वरस्यापित्रिदिनंदत्तानांविवाहितानांभर्त्तुर्गृहेएवनतुपितुः १६ तासांमातॄणामेवयावन्मासस्थिनागर्भस्त्रावदि 

ततोवाग्दानपर्यंतंयावदेकाहमेवहि अतःपरं वृद्धानांत्रिरात्रमितिनिश्चयः १५ वाक्प्रदानेकृतेतत्रज्ञेयंचोभयतस्त्र्य-
हम् पितुर्वरस्यचततोदत्तानांभर्त्तुरेवहि १६ षण्मासाभ्यंतरेयावद्गर्भस्त्रावोभवेद्यदि तदामाससमैस्तासांदिवसैः
शुद्धिरिष्यते १७ अतऊर्ध्वंस्वजात्युक्तमाशौचंतासुविद्यते सद्यःशौचंसपिंडानांगर्भस्यपतनेसति १८ सर्वेषामे-
ववर्णानांसूतकेमृतकेपिवा दशाहाच्छुद्धिरित्येषकलौशास्त्रस्यनिश्चयः १९ आशीर्वादंदेवपूजांप्रत्युत्थानाभिवंदन-
म् पर्यंकेशयनंस्पर्शनंकुर्यान्मृतसूतके २० संध्यादानंजपंहोमंस्वाध्यायंपितृतर्पणम् ब्रह्मभोज्यंव्रतंनैवकर्त्तव्यंमृतसू-
तके २१

नानिसूतकमितिवचनात् १७ तासुमातृष्वेवनतुपित्रादिषु १८ सामान्यमुक्त्वाविशेषशास्त्रमाह सर्वेषामिति सामान्यशा- ६३
स्त्रतोनूनंविशेषोबलवान्भवेदिति विशेषस्यैवप्रामाण्यात् १९ सूतकप्रयोजनमाह संध्येतित्रिभिः २० २१ ७ ७ ७

२२ व्रतिनः ब्रह्मचारिणः तेनगुरुशुश्रूषानत्याज्याइति यद्वा चांद्रायणादिमहाव्रतयुक्तस्यतेनापिव्रतभंगोनकर्त्तव्यश्चेतिभावः मंत्रपूतस्यम-
हामंत्रजपैः सदापवित्रस्यजपत्यागोनोचितइति साग्निकस्यहवनस्यावश्यकत्वात् ब्रह्मनिष्ठस्यगृहस्थस्यापितस्यातिवर्णाश्रमित्वाद्वर्णाश्रमो-
चितंसूतकंनास्त्येव जन्ममरणयोरवास्तवत्वाच्चेति यतिनः संन्यासिनस्तस्यापिलोकेषणायाव्युत्थितत्वात् राज्ञांमूर्धाभिषिक्तानांदानंयावत्स्व

नित्यंनैमित्तिकंकाम्यंसूतकेयःसमाचरेत् तस्यपूर्वकृतंनित्यादिकंकर्मविनश्यति २२ व्रतिनोमंत्रपूतस्यसाग्निक
स्यद्विजस्यच ब्रह्मनिष्ठस्ययतिनोनहिराज्ञांचसूतकम् २३ विवाहोत्सवयज्ञेषुजातेचमृतसूतके तस्यपूर्वकृतंचान्नं
भोज्यंतन्मनुरब्रवीत् २४ सूतकेयस्तुगृण्हातितदज्ञानान्नदोषभाक् दातादोषमवाप्नोतियाचकायददन्नपि २५
प्रच्छाद्यसूतकंयस्तुददत्यन्नंद्विजायच ज्ञात्वागृण्हातियेविप्रादोषभाजस्तएवहि २६

मेवेतिभावः २३ तस्यसूतकस्यप्राक्पूर्वं
कृतसिद्धान्नंपक्वान्नंतुभोज्यं भोजनार्हमेवपश्चात्कृतंनेति २४ तदज्ञानात्तस्यसूतकस्य अज्ञानाद्गृण्हातिसूतकेकथितेपियोयाचते
तस्मैददन्दातादोषभाक्नभवतीत्यर्थः २५ दातादोषमवाप्नोत्येवयदिवृणोति प्रच्छाद्यसंगोप्य २६

७ ७

तस्माद्सूतकंसपिंडनंविनानापयाति तदपसरणंविनाच्चदानादानयोरनधिकारादितिहेतोः सपिंडनंकुर्यादिति सपिंडनात्प्राक्प्रेतेः पिता २७
मुनिमतोक्तसपिंडनकालंप्रदर्शयति द्वादशाहइति २८ मुनिमतंनिराकृत्ययुगानुरूपंकथयति मयेति २९ मुनिमतेबहून्दोषान्प्रदर्श्य



तस्मात्सूतकशुद्ध्यर्थंपितुःकुर्यात्सपिंडनम् ततःपितृगणैःसार्धंपितृलोकंसगच्छति २७ द्वादशाहेत्रिपक्षेवाष-
ण्मासेवत्सरेपिवा सपिंडीकरणंप्रोक्तंमुनिभिस्तत्वदर्शिभिः २८ मयातुप्रोच्यतेतार्क्ष्यशास्त्रधर्मानुसारतः च-
तुर्णामेववर्णानांद्वादशाहेसपिंडनम् २९ अनित्यात्कलिधर्माणांपुंसांचैवायुषःक्षयात् अस्थिरत्वाच्छरीरस्य
द्वादशाहेप्रशस्यते ३० व्रतबंधोत्सवादीनिव्रतस्योद्यापनानिच विवाहादिभवेन्नैवमृतेचगृहमेधिनि ३१
भिक्षुर्भिक्षांनगृह्णातिहंतकारोनगृह्यते नित्यंनैमित्तिकंलुप्येद्यावत्पिंडंनमेलितम् ३२ कर्मलोपात्प्रत्यवायी
भवेत्तस्मात्सपिंडनम् निरग्निकःसाग्निकोवाद्वादशाहेसमाचरेत् ३३

स्वमतंद्रढयति अनित्यादितिपंचभिः कलिधर्माणा-
मनित्यत्वमेवाह पुंसामित्यादि ३० व्रतबंधःउपवीतसंस्कारःउत्सवःयज्ञादीनां आदिशब्देन होलिकादीनामपि व्रतस्य कार्तिकादेर्व्रतमात्रस्य आदीनि
द्विरागमनादीन्यपिगृहमेधिनि गृहेमृतेसति ३१ भिक्षुःसंन्यासीहंतकारःवैश्वदेवमकुर्वतांपंचसूनानिवर्तकान्नविभागः३२ प्रत्यवायीदोषभाग्भवेत्
३३

३४ अतः द्वादशाहस्यावश्यकत्वाद्धेतोः मृतस्थानंगोमयेनोपलिप्यसपिंडनंकारयेत् ३५ आपः उपस्पृशेत् हस्तौप्रक्षाल्याचमेत् ३६

यत्फलंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलम् तत्फलंसमवाप्नोतिद्वादशाहेसपिंडनात् ३४ अतःस्नात्वामृतस्थानेगोमयेनो
पलेपिते शास्त्रोक्तेनविधानेनसपिंडींकारयेत्कृतः ३५ पाद्यार्घ्याचमनीयाद्यैर्विश्वेदेवांश्चपूजयेत् कुपित्रैर्विकिरंद-
त्वापुनरापःउपस्पृशेत् ३६ दद्यात्पितामहादीनांत्रीन्पिंडांश्चयथाक्रमम् वसुरुद्रार्करूपाणांचतुर्थंमृतकस्यच
३७ चंदनैस्तुलसीपत्रैर्धूपैर्दीपैःसुभोजनैः मुखवासैःसुवस्त्रैश्चदक्षिणाभिश्चपूजयेत् ३८ प्रेतपिंडंत्रिधाकृ
त्वासुवर्णस्यशलाकया पितामहादिपिंडेषुमेलयेत्तंपृथक्पृथक् ३९ पितामह्यासमंमातुःपितामहसमंपितुः
सपिंडीकरणंकुर्यादितिताक्ष्र्यमतंमम ४० मृतेपितरियस्याथविद्यतेचपितामहः तेनदेयास्त्रयःपिंडाःप्रपितामह-
पूर्वकाः तेभ्यश्चपैतृकंपिंडंमेलयेत्तंत्रिधाकृतम् ४१

३७ ३८ ३९ पितुःपिंडस्यपितामहादिपिंडैःसहएकीकरणंसपिंडीकरणमि-
ति ४० अथशब्दोविधानांतरंपूर्ववत्सुवर्णशलाकयात्रिधाकृतंतंपैतृकंपितुःपिंडंतेभ्यःप्रपितामहादित्रिभिःपिंडैःसहमेलयेदिति ४१

अग्नेपितामह्याः पूर्वमातरिप्रशांतायांसत्यांपैतृकवत्प्रपितामह्यादीनांत्रयःपिंडान्दत्वातैःसहमातुःपिंडंमेलयेदिति ५२ पक्षांतरमाह य-
द्वेति तयोःमातापित्रोः पितामहरूपेमयिपितुःपिंडंलक्ष्म्यांमातुश्चेति ५३ स्त्रियःक्रियाकरणेपत्युरप्यधिकारोस्तीत्याह अपुत्रेति मतांतरं
निराकरोति भर्त्रेति भर्त्रास्वकांतेनसहनतुसपिंडनंयोग्यंभवति अर्धांगित्वात् ५४ दायेताचपतिश्चदंपती जायादयितयोर्जंदंभावौभवतः

मातर्यग्रेप्रशांतायांविद्यतेचपितामही तदामातृकश्राद्धेपिकुर्यात्पैतृकवद्विधिः ५२ यद्वामयिमहालक्ष्म्यांतयोःपिं
डंचमेलयेत् ५३ अपुत्रायाःस्त्रियःकुर्यात्पतिःसापिंडनादिकम् श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेत् ५४
भर्त्रादिभिस्त्रिभिःकार्यंसपिंडीकरणंस्त्रियः नैतन्ममतंताक्ष्यंपत्यासापिंड्यमर्हति ५५ एकांचितांसमारूढौ-
दंपतीयदिकाश्यप तृणमंतरतःकृत्वाश्वशुरादेस्तदाचरेत् ५६ एकएवसुतःकुर्यादादौपिंडादिकंपितुः तदूर्ध्वं
चप्रकुर्वीतसत्यास्नानंपुनश्चरेत् ५७ श्वशुरादेः अंतरतः मध्येतृणंकृत्वा तत्सत्याःसपिंडनंकुर्यादित्यन्वयः ५५ सत्याःस
पिंडादिकमपिएकएवसुतःकुर्यान्नतुद्वितीयः ५६ विदेशेदशाहमध्येजातायाःसत्याःश्रवणादिदिनादवशेषदिनेषुदशरात्रंविधायभ
र्तुः सपिंडदिनेसपिंडनादिकंकार्यंदशाहादनंतरंजातायास्तुश्रवणादिनाद्द्वादशेहनीति ५७ ७ ७ ७

४८ ४९ ५० हंतकारप्रमाणमाह चत्वारिपुष्कलानिषोडशग्रासमात्रम् ५१ ५२ स्रगांसुशीलांगां ५३ ५४ सूत्रंरक्षासूत्रम् ५५ श्र-

हुताशंयासमारूढादशाहाभ्यंतरेसती तस्याभर्त्तुर्दिनेकार्यंशय्यादानंसपिंडनम् ४८ कृत्वासपिंडनंतार्क्ष्य-
प्रकुर्यात्पितृतर्पणम् उदाहरेत्स्वधाकारंवेदमंत्रैःसमन्वितम् ४९ अतिथिंभोजयेत्पश्चाद्धंतकारंचसर्वदा ते-
नतृप्यंतिपितरोमुनयोदेवदानवाः ५० ग्रासमात्राभवेद्भिक्षाचतुर्ग्रासंतुपुष्कलम् पुष्कलानिचचत्वारिहंतकारो
विधीयते ५१ सपिंड्यांविप्रचरणौपूजयेच्चंदनाक्षतैः दानंतस्मैप्रदातव्यमक्षयतृप्तिहेतवे ५२ वर्षवृत्तिंघृ-
तंचान्नंस्रग्वर्णंरजतंस्रगाम् अश्वंगजंरथंभूमिमाचार्यायप्रदापयेत् ५३ ततश्चपूजयेन्मंत्रैःस्वस्तिवाचनपू-
र्वकम् कुंकुमाक्षतनैवेद्यैर्ग्रहान्देवींविनायकम् ५४ आचार्यस्ततःकुर्यादभिषेकंसमंत्रकम् बध्वासूत्रंकरे
दद्यान्मंत्रपूतांस्तथाक्षतान् ५५ ततश्चभोजयेद्विप्रान्मिष्टान्नैर्विविधैःशुभैः दद्यात्सदक्षिणांतेभ्यःसजलान्नान्द्विषट्घटा
न् ५६

भैःसरसैःबहुशर्करायुक्तैरित्यर्थः सजलान्नान्जलपूर्णान् मोदकदक्षिणासहितान्द्विषड्द्वादशघटान्द्वादशविप्रान्भोजयित्वातेभ्योदद्यादिति ५६

द्विजभोजनादनंतरंवर्णैर्विप्रादिभिः वार्याद्याः क्रमात्स्प्रष्टव्याः ततस्तेशुद्ध्येरन्नित्यन्वयः ब्राह्मणादिभिश्चतुर्वर्णैश्चत्वारिक्रमात्स्प्रष्टव्यानीत्य- र्थः ५७ अथसपिंडनानंतरंशय्यादानंनिरूपयति एवमित्यादि ५८ ५९ शय्यांआस्तृतायांविचित्रवस्त्रेणाच्छादितायांभुविन्यसेत् स्थापये दितितृतीयेनान्वयः कथंभूतांसारदारुमयींभारसंवहनकाष्ठरचितां यद्वा साररूपोदारुर्विद्रुमस्तन्मयींवारम्यामितिविशेषणोक्तरम्यतामेवा



वार्यायुधप्रतोदस्तुदंडस्तुद्विजभोजनात् स्प्रष्टव्यानंतरंवर्णैःशुद्ध्येरंस्तेततःक्रमात् ५७ एवंसपिंडनंकृत्वाक्रियावस्त्रा णिसंत्यजेत् शुक्लांबरधरोभूत्वाशय्यादानंप्रदापयेत् ५८ शय्यादानंप्रशंसंतिसर्वेदेवाःसवासवाः तस्माच्छय्याप्रदा- तव्यामरणेजीवितेपिवा ५९ सारदारुमयींरम्यांसुचित्रैश्चित्रितांदृढाम् पट्टसूत्रैर्वितारितांहेमपत्रैरलंकृताम् ६० हंसतूलीप्रतिच्छन्नांशुभशीर्षोपधानिकाम् प्रच्छादनपटीयुक्तांपुष्पगंधैःसुवासिताम् ६१

ह सुचित्रैरिति वितारितांसंग्रथितांलोहपत्रस्थानेहेमपत्रैरिति ६० हंसवदुज्ज्वलामृदुलाचयातूली अधःप्रस्तरणिकाभाषायांतुलाईच्चे ति तयाप्रतिच्छन्नां आच्छादितांशुभानिसुंदराणि शीर्षोपधानिकानियस्यांभाषायांतकियाइतिप्रच्छादनपटीतदाच्छादकमुपरितनवस्त्रम् ६१

दिव्यंबंधैःभाषायांकसणाइति ६२ छत्रंचतुश्वरणसंल्लग्नंरथस्थवत् रौप्यंरूप्यादिधातुमयंदीपालयंदीवटइतिभाषायां चामरंव्यजनंआ
सनंकाष्ठमयंचौकीइतिभाषायांभाजनंजलपानपात्रं भृंगारंगडूक गडवीझारीतिभाषायांकरका अल्पघटाःकलशमितिकमंडलु

दिव्यबंधैःसुबद्धांचसुविशालांसुखप्रदाम् शय्यामेवंविधांकृत्वास्तृतायांन्यसेद्भुवि ६२ छत्रंदीपालयंरौप्यं
चामरासनभाजनम् भृंगारकरकादर्शपंचवर्णवितानकम् ६३ शयनस्थमवेत्किंचिद्यच्चान्यदुपकारकम् तत्स
र्वंपरितस्तस्याःस्वेस्वेस्थानेनियोजयेत् ६४ तस्यांसंस्थापयेद्धैमं हरिंलक्ष्मीसमन्वितम् सर्वाभरणसंयुक्तमायुधां-
बरसंयुतम् ६५ स्त्रीणांचशयनेधृत्वाकज्जलालक्तकुंकुमम् वस्त्रभूषादिकंयच्चसर्वमेवप्रदापयेत् ६६ ततोविप्रं
सपत्नीकंगंधपुष्पैरलंकृतम् कर्णांगुलीयाभरणैःकंठसूत्रैश्चकांचनैः ६७ उष्णीषमुत्तरीयंचचोलंचपरिधायच
स्थापयेत्सुखशय्यायांलक्ष्मीनारायणाग्रतः ६८

र्णा आदर्शंदर्पणं अन्यत्तांबूलपात्रादिउपहारकसामग्रींस्वेस्वेस्थानेइति
छत्रम् पादेषुदीपालयंवामेचामरं शय्योपरिआसनंदक्षेभाजनं तदुपरिवितानंछत्रस्योपरिनियोजयेदिति ६३ ६४ ६५ स्त्रीणांसौ
भाग्यवतीनाम् ६६ कर्णांगुलीयादिभिःदंपत्योराभरणानितैश्चालंकृतंविप्रम् स्थापयेदित्युत्तरेणान्वयः ६७ ६८ ७ ७

६९ ७० ममेयमितिजीनत्करणेमरणेममपितुरिति शेषः इयंशय्याअशून्यामयाममपित्रावा सहितैवभूयादित्यर्थः ७१ ७२ कोदद्यादिति



कुंकुमैःपुष्पमालाभिर्हरिंलक्ष्मींसमर्चयेत् पूजयेल्लोकपालांश्चग्रहान्देवींविनायकम् ६९ उत्तराभिमुखोभूत्वागृहीत्वाकुसुमांजलिम् उच्चारयेदिमंमंत्रंविप्रस्यपुरतःस्थितः ७० यथाकृष्णत्वदीयास्तिशय्याक्षीरोदसागरे तथाभूयादशून्येयंममजन्मनिजन्मनि ७१ एवंपुष्पांजलिंविप्रेप्रतिमायांहरेःक्षिपेत् ततःसोपस्करांशय्यांदानंसंकल्पपूर्वकम् ७२ दद्याद्व्रतोपदेष्ट्रेचगुरवेब्रह्मवादिने गृहाणब्राह्मणेमांत्वंकोददातीतिकीर्त्तयन् ७३ आंदोलयेद्द्विजंलक्ष्मींहरिंचशयनस्थितम् ततःप्रदक्षिणीकृत्यप्रणिपत्यविसर्जयेत् ७४ सर्वोपस्करणैर्युक्तांप्रदद्यादतिसुंदरम् शय्यायांसुखसुप्त्यर्थंगृहंचविभवेसति ७५ जीवमानःस्वहस्तेनयदिशय्यांददातियः तज्जीवतावृषोत्सर्गेपर्वणीषुसमाचरेत् ७६ इयमेकस्यदातव्याबहूनांनकदाचन साविभक्ताचविक्रीतादातारंपातयत्यधः ७७

दानाभिमानंनकुर्यादिति ७३ ७४ सर्वोपस्करणैर्गृहोचितसर्ववस्तुभिःसहितं सुखसुप्त्यर्थंसुखेनसुप्तिर्निद्रातदर्थंगृहंचदद्यादिति ७५ ७६

७८ ७९ आभूतसंप्लवंमहाप्रलयपर्यंतं प्रलयेलीनोपिपुनः सृष्टिसमयेतत्रैवोत्पद्य आतंकवर्जितःपीडारहितःस्वर्गेतिष्ठतीतिपूर्ववत्स्म

पात्रेप्रदायशयनंवांछितंफलमाप्नुयात् पिताचदाताननयःपरत्रेहचमोदते ७८ पुरंदरगृहेदिव्येसूर्यपुत्रालयेपिच
उपतिष्ठेन्नसंदेहःशय्यादानप्रभावतः ७९ विमानवरमारूढःसेव्यमानोप्सरोगणैः आभूतसंप्लवंयावत्तिष्ठत्यातंक
वर्जितः ८० सर्वतीर्थेषुयत्पुण्यंसर्वपर्वदिनेषुच तेभ्यश्चाभ्यधिकंपुण्यंशय्यादानोद्भवंभवेत् ८१ एवंदत्त्वाकृतः
शय्यांपददानंप्रदापयेत् तच्छृणुष्वमयाख्यातंयथावत्कथयामिते ८२ छत्रोपानहवस्त्राणिमुद्रिकाचकमंडलुः
आसनंपंचपात्राणिपदंपंचविधंस्मृतम् ८३ दंडेनताम्रपात्रेणह्यामान्नैर्भोजनैरपि अर्घ्ययज्ञोपवीतैश्चपदंसंपूर्ण
तांव्रजेत् ८४ त्रयोदशपदानीत्थंयथाशक्त्याविधायच त्रयोदशेभ्योविप्रेभ्यःप्रदद्याद्द्वादशेहनि ८५ अनेनपद
दानेनधार्मिकायांतिसद्गतिम् यममार्गगतानांचपददानंसुखप्रदम् ८६ आतपस्तत्रवैरौद्रोदह्यतेयेनमानवः छ
त्रदानेनकृतछायाजायतेतस्यमूर्धनि ८७

तव्यम् ८० ८१ ८२ शय्यादानोत्तरंपददानंप्रदद्यादित्याह छत्रेति ८३ ८४ ८५ ८६ ८७ ७२

८८ पथियममार्गेस्कस्वंनिस्तरतेभुंक्ते ८९ ९० ९१ ९२ पाथेयंपरलोकभोग्यं ९३ ९४ ९५ ननुउत्तमंषोडशंत्वेतन्मयानेकथितंस्वग 
क्षपयित्वान्वरुंताक्ष्यंकुर्यादेकादशेहनि इतिप्रागुक्तत्वादेकादशाहे कृतायामप्युत्तमषोडश्यांपुनःप्रतिमासंघटंपिंडदानंचकिमर्थमितिचेत्तत्राह कृ 

अतिकंटकसंकीर्णेयमलोकस्यवर्त्मनि अश्वारूढाश्चतेयांतिददंतेयत्कपानहौ ८८ शीतोष्णवातदुःखानि तत्रघोराणि खेचर वस्त्रदानप्रभावेनस्कस्वंनिस्तरतेपथि ८९ यमदूतामहारौद्राःकरालाःकृष्णपिंगलाः नपीडयंतितंमार्गेमुद्रिकायाःप्रदानतः ९० बहुधर्मसमाकीर्णेनिर्वातितोयवर्जिते कमंडलुप्रदानेनतृषितःपिबतेजलम् ९१ मृतोद्देशेनयोदद्यादुदपात्रंचताम्रजम् प्रपादनसहस्रस्ययत्फलंसोश्नुतेध्रुवम् आसनेभोजनंचैवदत्तेसम्यग्द्विजातये स्कस्वेनभुंक्ते पाथेयंपथिगच्छन्शनैःशनैः ९३ एवंसपिंडनदिनेदत्वादानंविधानतः बहून्संभोजयेद्विप्रान्यश्वपाकादिकानपि ९४ ततःसपिंडनादूर्ध्वमर्वाक्संवत्सरादपि प्रतिमासंप्रदातव्योजलकुंभःसपिंडकः ९५ कृतस्यकरणंनास्तिप्रेतकार्याद्दृतेखग प्रेतार्थंतुपुनःकुर्यादक्षयतृप्तिहेतवे ९६

तस्येति अत्रकृतस्यकरणंनास्तीतिनिषेधस्तत्प्रेतकार्यंविनाव्रतोद्यापनादिष्वेवप्रेता
र्थंतुपुनःकरणेनतस्याक्षय्यतृप्तिर्भवतीतिहेतोःपुनरपिकुर्यादित्यर्थः ९६ ७ ७ ७ ७ ७ 

अतःमासिकादीनामावश्यकत्वादितिहेतोः विशेषास्तु पौर्णमास्यादितिथिषु पुरुषे मृते सति प्रथमं पाक्षिकविशेषं वक्ष्यामीति १७ तमेवाह पौर्णमास्यामिति द्वाभ्याम् तिथिषुरिक्तास्यात्चतुर्थीतस्यप्रेतस्यऊनिकापाक्षिकश्राद्धतिथिः १८ १९ मासिकस्यविशेषमाह एकएवेति त्रिभिः मलमासेक्षयमासे रविसंक्रमहीनोयोमलमासोऽभिधीयते सएवतुद्विसंक्रान्तोक्षयमासोप्युदीरितइति यदिकार्त्तिकमार्गशीर्ष

अतोविशेषंवक्ष्यामिमासिकस्याब्दिकस्यच पाक्षिकस्यविशेषंचविशेषंतिथिषुमृते १७ पौर्णमास्यांमृतोयस्तुचतु-
र्थीतस्यऊनिका चतुर्थ्यांतुमृतोयस्तुनवमीतस्यऊनिका १८ नवम्यांतुमृतोयस्तुरिक्तातस्यचतुर्दशी इत्येवंपाक्षि
कंश्राद्धंकुर्याद्दिशातिथेर्दिने १९ एकएवयदामासःसंक्रांतिद्वयसंयुतः मासद्वयंगतंश्राद्धंमलमासेहिशस्यते १००
एकस्मिन्मासिमासौद्वौयदिस्यातांनयोर्द्वयोः तावेवपक्षौताएवतिथयस्त्रिंशदेवहि १

योः क्षयमासांतंयातेसति कार्त्तिकसंबंधीनि मार्गशीर्षसंबंधीनि यानिश्राद्धव्रतादीनिचयस्मिन्पक्षेयस्मिन्तिथौ यस्मिन्नपराण्हादिकाले विहितानितानिक्षयमासेनत्रतत्रैवकर्तव्यानीति १०० एकस्मिन्मासेमासद्वयंनिर्धारयतितोः पंचदशएवतिथयः उभोपक्षौज्ञेयौ ताःपंचदशएवत्रिंशत्तिथयोज्ञातव्याः १

गरुन्टी· असंक्रांतेअधिकेमासेयदिद्वादशोवसति तदानुतस्मिन्नेवप्रथमाब्दिकंकर्त्तव्यम् २ ३ वार्षिकीप्रथमाब्दिकी ४ प्रतिसंवत्सरंद्वितीयाब्दि· अ·
६९ कादिकंतुमलमासेश्राद्धदिनस्यवंध्यत्वनिरासार्थंपितुरुद्देशेनब्राह्मणान्भोजयित्वाशुद्धमासेसपिंडकंश्राद्धंकुर्यादिति ५ एवंउक्तप्रकारे १२
ण ६ ७ गजच्छायायोगेकृतंश्राद्धंगजच्छायम् गजच्छाया कृष्णपक्षेत्रयोदश्यांमघास्विंदुःकरेरविः यदातदागजच्छायाश्राद्धंपुण्यै

तिथ्यर्द्धेप्रथमेपूर्वोद्वितीयेऽर्द्धेतदुत्तरः मासावितिबुधैश्चिंत्यौमलमासस्यमध्यगौ २ असंक्रांतेचकर्त्तव्यंसपिंडीक-
रणंखग तथैवमासिकंश्राद्धंवार्षिकंप्रथमंतथा ३ संवत्सरस्यमध्येतुयदिस्यादधिमासिकः तदात्रयोदशेमा-
सिक्रियाप्रेतस्यवार्षिकी ४ पिंडवर्ज्यमसंक्रांतेसंक्रांतेपिंडसंयुतम् प्रतिसंवत्सरंश्राद्धमेवंमासद्वयेऽपिच ५
एवंसंवत्सरेपूर्णेवार्षिकंश्राद्धमाचरेत् तस्मिन्नपिविशेषेणभोजनीयाद्विजातयः ६ कुर्यात्संवत्सरादूर्ध्वंश्राद्धेपिंड
त्रयंसदा एकोद्दिष्टंनकर्त्तव्यंतेनस्यात्पितृघातकः ७ तीर्थश्राद्धंगयाश्राद्धंगजच्छायंचपैतृकम् अब्दमध्ये-
नकुर्वीतग्रहणेनयुगादिषु ८ ख्वाप्यते इति यद्वा पूर्वाभिमुखस्थितस्यगजस्यच्छायायांदक्षिणाभिमुखोभूत्वाश्राद्धंकुर्याद्- ६९
त्यपिकेचित् युगादिषु युगादितिथयोयथा माघपंचदशीकृष्णानभस्येचत्रयोदशी तृतीयामाधवेशुक्लानवम्यूर्जेयुगादयइति क्रमोऽत्र

नविवक्षितः तद्यथा कार्तिकशुक्लनवमीसत्ययुगस्याद्यातिथिः वैशाखेशुक्लअक्षय्यतृतीयात्रेतायुगस्य माघअमा [illegible]
शीकलियुगस्येति अत्राब्दमध्येनेतिकेषांचिन्मतंकेचिद्दाक्षिणात्यादयस्तद्वर्षमध्येऽपिकुर्वंति किमिति पापिनामेववर्षगम्योयममार्गोभ
वति अतस्तस्यातिक्रमणानंतरंगयादिश्राद्धंकर्त्तव्यमिति अब्दमध्येनेतिनिषेधः किंच सकृतिनस्तत्क्षणमेवधर्मसभांविशंति अतो-

यदापुत्रेणवैकार्यंगयाश्राद्धंखगेश्वर तदासंवत्सरादूर्ध्वंकर्त्तव्यंपितृभक्तितः ९ गयाश्राद्धात्प्रमुच्यंतेपितरोभवसागरा
त् गदाधरानुग्रहेणातेयांतिपरमांगतिम् १० तुलसीमंजरीभिश्चपूजयेद्विष्णुपादुकाम् तस्यांलवादितीर्थेषुपिं-
डान्दद्याद्यथाक्रमम् ११ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतम् शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे १२ गया-
मुपेत्ययःश्राद्धंकरोतिकुलनंदनः सफलंतस्यतज्जन्मजायतेपितृतुष्टिदम् १३ श्रूयतेचापिपितृभिर्गीतागाथाखग
गेश्वर. इक्ष्वाकोर्मनुपुत्रस्यकलापोपवनेसुरैः १४

ऽब्दमध्येपिकुर्यादित्यभिप्रायः ८ गयामाहात्म्यमाहगयेति ९ १० ११ शमीपत्रप्रमाणम् अतिसूक्ष्ममपिपिंडम् गयाशिरे गयदैत्यस्यआ-
संमतात् शिरोभागेइति गयामाहात्म्योक्तंज्ञातव्यं १२ १३ कलापोहिमवत्पार्श्ववर्तीग्रामविशेषस्तस्योपवनेइक्ष्वाकुंप्रतिगीता १४ ७

कौशिकएवभरद्वाजस्तस्यात्मजानांचरित्रंविशेषतयाहरिवंशेज्ञातव्यमिति १५ १६ १७ १८ १९ २० २१ २२



अपिनस्तेभविष्यंतिकुलेसन्मार्गशीलिनः गयामुपेत्ययेपिंडान्दास्यंत्यस्माकमादरात् १५ एवमामुष्मिकींतार्क्ष्य
यःकरोतिक्रियांसुतः सस्यात्सुखीभवेन्मुक्तोकौशिकस्यात्मजायथा १६ भरद्वाजात्मजाःसप्तभुक्त्वाजन्मपरं
पराम् कृत्वापिगोवधंतार्क्ष्यमुक्ताःपितृप्रसादतः १७ सप्तव्याधादशार्णेषुमृगाःकालंजरेगिरौ चक्रवाकाःश
रद्वीपेहंसाःसरसिमानसे १८ तेपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः पितृभक्त्याचतेसर्वेगतामुक्तिंद्विजात्मजाः
१९ तस्मात्सर्वप्रयत्नेनपितृभक्तोभवेन्नरः इहलोकेपरेवापिपितृभक्त्यासुखीभवेत् १० एततृतार्क्ष्यमयाऽ
ख्यातंसर्वमेवोर्ध्वदैहिकम् पुत्रवांच्छाप्रदातारंपितृमुक्तिप्रदायकम् २१ निर्धनोऽपिनरःकश्चित्यःशृणोति
कथामिमाम् सोपिपापविनिर्मुक्तोदानस्यफलमाप्नुयात् २२ विधिनाकुरुतेयस्तुश्राद्धंदानंमयोदितम्
शृणुयाद्गारुडंचापिशृणुतस्यापियत्फलम् २३

२२ २३ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५

२४ २५ २६ २७ इतिटीकायांत्रयोदशोऽध्यायः १३ धर्मराजपुरंधर्मसभांधर्मसभासदः धर्ममार्गाश्चधर्माश्चहरिः

पितादद्दातिसत्पुत्रान्गोधनानिपितामहः धनदाताभवेत्सोपियस्तस्यप्रपितामहः २४ दद्याद्विपुलमन्नाद्यंवृद्ध-
स्तृप्रपितामहः तृप्ताःश्राद्धेनतेसर्वेदत्वापुत्रस्यवांछितम् २५ गच्छंतिधर्ममार्गैश्चधर्मराजस्यमंदिरम् तत्रध
र्मसभायांतेतिष्ठंतिपरमादरात् २६ सूतउवाच एवंश्रीविष्णुनाप्रोक्तमौर्ध्वदानसमुद्भवम् श्रुत्वामाहात्म्यम
तुलंगरुडोहर्षमागतः २७ इतिश्रीगरुडपुराणेसारोद्धारेसपिंडनादिसर्वकर्मनिरूपणोनामत्रयोदशोऽध्या
यः १३ गरुडउवाच यमलोकःकियन्मात्रःकीदृशःकेननिर्मितः सभाचकीदृशीतस्यांधर्मआस्तेचकैः
सह १ येधर्ममार्गैर्गच्छंतिधार्मिकाधर्ममंदिरम् तान्धर्मानपिमार्गांश्चममाख्याहिदयानिधे २ श्रीभगवानु
वाच शृणुतार्क्ष्यप्रवक्ष्यामियद्गम्यंनारदादिभिः तद्धर्मनगरंदिव्यंमहापुण्यैरवाप्यते ३ याम्यनैर्ऋत
योर्मध्येपुरंवैवस्वतस्ययत् सर्ववज्रमयंदिव्यमभेद्यंतत्सुरासुरैः ४

ग्राहचतुर्दशे १ चतुर्दशाऽध्यायार्थस्तुस्पष्टएवज्ञातव्यः १ २ ३ ४ ५ ६ ७

चतुरस्रंचतुर्द्वारमुच्चप्राकारवेष्टितम् योजनानांसहस्रंहि प्रमाणेनतदुच्यते ५ तस्मिन्पुरेऽस्तिसुभगंचित्रगुप्तस्यमंदिरम् पं
चविंशतिसंख्याकैर्योजनैर्विस्तृतायतम् ६. दशोच्छ्रितंमहादिव्यंलोहप्राकारवेष्टितम् प्रतोलीशतसंचारंपताकाध्वजभूषि
तम् ७ विमानगणसंकीर्णंगीतवादित्रनादितम् चित्रितंचित्रकुशलैर्निर्मितंदेवशिल्पिभिः ८ उद्यानोपवनैरम्यंनानावि
हगकूजितम् गंधर्वैरप्सरोभिश्चसमंतात्परिवारितम् ९ तत्सभायांचित्रगुप्तःस्वासनेपरमाद्भुते संस्थितोगणयेदायुर्मानु
षाणांयथातथम् १० नमुह्यतिकथंचित्सं सुकृतेदुष्कृतेऽपिवा यद्येनोपार्जितंकर्मशुभंवायदिवाऽशुभम् ११ तत्सर्वंभुंजते
यत्रचित्रगुप्तस्यशासनात् चित्रगुप्तालयात्प्राच्यांज्वरस्यास्तिमहागृहम् १२ दक्षिणस्यांचशूलस्यलूताविस्फोटयोस्तथा प-
श्चिमेकालपाशःस्यादजीर्णस्यारुचेस्तथा १३ उदीच्यांराजरोगोऽस्तिपांडुरोगस्तथैवच ऐशान्यांतुशिरोर्त्तिःस्यादाग्नेय्यामस्ति
मूर्च्छना १४ अतिसारोनैर्ऋत्येतुवायव्यांशीतदाहकौ एवमादिभिरन्यैश्चव्याधिभिःपरिवारितः १५ लिखतेचित्रगुप्त
स्तुमानुषाणांशुभाशुभम् चित्रगुप्तालयादग्रेयोजनानांचविंशतिः १६ पुरःमध्येमहादिव्यंधर्मराजस्यमंदिरम् अस्तिर-
त्नमयंदिव्यंविद्युज्ज्वालार्कवर्चसम् १७ द्विशतंयोजनानांचविस्तारायामतःस्फुटम् पंचाशच्चप्रमाणेनयोजनानांसमुच्छ्रितम्
१८ धृतंस्तंभसहस्रैश्चवैडूर्यमणिमंडितम् कांचनालंकृतंनानाहर्म्यप्रासादसंकुलम् १९ शारदाभ्रनिभंरुक्मकलशैः

सुमनोहरम् चित्रस्फाटिकसोपानंवज्रकुट्टिमशोभितम् २० मुक्ताजालगवाक्षंचपताकाध्वजभूषितम् घंटानेकनिनादाढ्यं-
हेमतोरणमंडितम् २१ नानाश्चर्यमयंस्वर्णकपाटशतसंकुलम् नानाद्रुमलतागुल्मैर्निष्कंटैःसुविराजितम् २२ एवमादि-
भिरन्यैश्चभूषणैर्भूषितंसदा आत्मयोगप्रभावैश्चनिर्मितंविश्वकर्मणा २३ तस्मिन्नस्तिसभादिव्याशतयोजनमायता अ-
र्कप्रकाशाभ्राजिष्णुःसर्वतःकामरूपिणी २४ नातिशीतानचात्युष्णामनसोऽत्यंतहर्षिणी नशोकोनजरा तस्यांक्षुत्पिपासेन
चाप्रियम् २५ सर्वेकामास्थितायस्यांयेदिव्यायेचमानुषाः रसवच्चप्रभूतंचभक्ष्यंभोज्यंचसर्वशः २६ रसवंतिचतोयानि-
शीतान्युष्णानिचैवहि पुण्याःशब्दादयस्तस्यांनित्यंकामफलाद्रुमाः २७ असंबाधाचसाताक्ष्यैरम्याकामगमासभा दीर्घ
कालंतपस्तप्त्वानिर्मिताविश्वकर्मणा २८ तामुग्रतपसोयांतिसुव्रताःसत्यवादिनः शांतास्संन्यासिनःसिद्धाःपूताः
पूतेनकर्मणा २९ सर्वेभास्वरदेहास्तेऽलंकृताविरजोंबराः स्वकृतैःकर्मभिःपुण्यैस्तत्रतिष्ठंतिभूषिताः ३० त-
स्यांसधर्मोभगवानासनेऽनुपमेशुभे दशयोजनविस्तीर्णेसर्वरत्नैःसुमंडिते ३१ उपविष्टःसतांश्रेष्ठश्छत्रशोभि
तमस्तकः कुंडलालंकृतःश्रीमान्महामुकुटमंडितः ३२ सर्वालंकारसंयुक्तोनीलमेघसमप्रभः वालव्यजन-
हस्ताभिरप्सरोभिश्चवीजितः ३३ गंधर्वाणांसमूहाश्चसंघशश्चाप्सरोगणाः गीतवादित्रनृत्याद्यैःपरितःसेवयं

तितम् ३४ मृत्युनापाशहस्तेनकालेनचबलीयसा चित्रगुप्तेनचित्रेणकृतांतेननिषेविता ३५ पाशदंडधरैरुग्रैर्निर्देशवशवर्त्ति
भिः आत्मतुल्यबलैर्नानारूपभटैःपरिवारितः ३६ अग्निष्वात्ताश्चपितरःसोमपाश्चोष्मपाश्चये स्वधावंतोबर्हिषदोमूर्त्ता
मूर्त्ताश्चयेखग ३७ अर्यमाद्याःपितृगणामूर्तिमंतस्तथापरे सर्वेतेमुनिभिःसार्द्धंधर्मराजमुपासते ३८ अत्रिर्वसिष्ठः
पुलहोदक्षःक्रतुरथांगिराः जामदग्न्योभृगुश्चैवपुलस्त्यागस्त्यनारदाः ३९ एतेचान्येचबहवःपितृराजसभासदः नशक्याःप
रिसंख्यातुंनामभिःकर्मभिस्तथा ४० व्याख्यातिधर्मशास्त्राणांनिर्णेतारोयथातथम् सेवंतेधर्मराजानंशासनात्परमेष्ठिनः
४१ राजानःसूर्यवंशीयाःसोमवंश्यास्तथापरे सभायांधर्मराजानंधर्मज्ञाःपर्युपासते ४२ मनुर्दिलीपोमांधातासगरश्च
भगीरथः अंबरीषोऽनरण्यश्चमुचुकुंदोनिमिःपृथुः ४३ ययातिर्नहुषःपूरुर्दुष्यंतश्चशिबिर्नलः भरतःशंतनुःपांडुःसह
स्रार्जुनएवच ४४ एतेराजर्षयःपुण्याःकीर्तिमंतोबहुश्रुताः इष्ट्वाऽश्वमेधैर्बहुभिर्जाताधर्मसभासदः ४५ सभायांधर्मरा-
जस्यधर्मएवप्रवर्त्तते नतत्रपक्षपातोऽस्तिनानृतंनचमत्सरः ४६ सभ्याःसर्वेशास्त्रविदःसर्वेधर्मपरायणाः तस्यांसभायांस
ततंवैवस्वतमुपासते ४७ ईदृशीसासभातात्स्यधर्मराज्ञोमहात्मनः नतांपश्यंतियेपापादक्षिणेनपथागताः ४८ धर्म
राजपुरेगंतुंचतुर्भागाभवंतिच पापिनांगमनेपूर्वंसतुतेपरिकीर्तितः ४९ पूर्वादिभिस्त्रिभिर्मार्गैर्येगताधर्ममंदिरे तेहि

सुकृतिनःपुण्यैस्तस्यांगच्छंतितान्शृणु ५० पूर्वमार्गस्तुतत्रैकःसर्वभोगसमन्वितः पारिजाततरुच्छायाऽच्छादितारत्नम-
ण्डितः ५१ विमानगणसंकीर्णोहंसावलिविराजितः विद्रुमारामसंकीर्णःपीयूषद्रवसंयुतः ५२ तेनब्रह्मर्षयोयांतिपुण्या-
राजर्षयोऽमलाः अप्सरोगणगंधर्वविद्याधरमहोरगाः ५३ देवताऽऽराधकाश्चान्येशिवभक्तिपरायणाः ग्रीष्मेप्रपादान-
रतामाघेकाष्ठप्रदायिनः ५४ विश्रामयंतिवर्षायांविरक्तान्दानमानतः दुःखितस्यामृतंब्रूतेददतेत्वाश्रमंतुये ५५ स-
त्यधर्मरतायेचक्रोधलोभविवर्जिताः पितृमातृषुयेभक्तागुरुशुश्रूषणेरताः ५६ भूमिदागृहदागोदाविद्यादानप्रदायकाः
पुराणवक्तृश्रोतारःपारायणपरायणाः ५७ एतेसुकृतिनश्चान्येपूर्वद्वारेविशंतिच यांतिधर्मसभायांतेसुशीलाःशुद्ध-
बुद्धयः ५८ द्वितीयस्तूत्तरोमार्गोमहारथशतैर्वृतः नरयानसमायुक्तोहरिचंदनमंडितः ५९ हंससारससंकीर्णश्चक्र-
वाकोपशोभितः अमृतद्रवसंपूर्णस्तत्रभातिसरोवरः ६० अनेनवैदिकायांतितथाऽभ्यागतपूजकाः दुर्गाभान्वोश्चये
भक्तास्तीर्थस्नाताश्चपर्वसु ६१ येमृताधर्मसंग्रामेऽनशनेनमृताश्चये वाराणस्यांगोग्रहेचतीर्थतोयेमृताविधेः ६२
ब्राह्मणार्थेस्वामिकार्येतीर्थक्षेत्रेषुयेमृताः येमृतादेवविध्वंसेयोगाभ्यासेनयेमृताः ६३ सत्पात्रपूजकानित्यंमहादानरताश्चये
प्रविशंत्युत्तरेद्वारेयांतिधर्मसभांचते ६४ तृतीयःपश्चिमेमार्गोरत्नमंदिरमंडितः सुधारससदापूर्णदीर्घिकाभिर्विराजितः

६५ ऐरावतकुलोद्भूतमत्तमातंगसंकुलः उच्चैःश्रवःसमुत्पन्नहयरत्नसमन्वितः ६६ एतेनात्मपरायांतिसच्छास्त्रपरिचिं-
तकाः अनन्यविष्णुभक्ताश्चगायत्रीमंत्रजापकाः ६७ परहिंसापरद्रव्यपरवादपराङ्मुखाः स्वदारनिरताःसंतःसाग्निकावेदपा-
ठकाः ६८ ब्रह्मचर्यव्रतधरावानप्रस्थास्तपस्विनः श्रीपादसंन्यासपराःसमलोष्टाश्मकांचनाः ६९ ज्ञानवैराग्यसंपन्नाःसर्वभू-
तहितेरताः शिवविष्णुव्रतकराःकर्मब्रह्मसमर्पकाः ७० ऋणैस्त्रिभिर्विनिर्मुक्ताःपंचयज्ञरताःसदा पितॄणांश्राद्धदातारः
कालसंध्यामुपासकाः ७१ नीचसंगविनिर्मुक्ताःसत्संगतिपरायणाः एतेऽप्सरोगणैर्युक्ताविमानवरसंस्थिताः ७२ स्र-
धापानंप्रकुर्वंतोयांतितेधर्ममंदिरम् विशंतिपश्चिमद्वारेयांतिधर्मसभांतरे ७३ यमस्तानागतान्दृष्ट्वास्वागतंवदतेमुहुः
समुत्थानंचकुरुतेतेषांगच्छतिसंमुखम् ७४ तदाचतुर्भुजोभूत्वाशंखचक्रगदाऽसिभृत् पुण्यकर्मरतानांचस्नेहान्मित्रव-
दाचरेत् ७५ सिंहासनंचददतेनमस्कारंकरोतिच पादार्घंकुरुतेपश्चात्पूजतेचंदनादिभिः ७६ नमस्कुर्वंतुभोसभ्या-
ज्ञानिनंपरमादरात् एषमेमंडलंभित्वाब्रह्मलोकंप्रयास्यति ७७ भोभोबुद्धिमंतोश्रेष्ठानरकक्लेशभीरवः भवद्भिः
साधितंपुण्यैर्देवत्वंसुखदायकम् ७८ मानुषंदुर्लभंप्राप्यनित्यंयस्तन्नसाधयेत् सयातिनरकंघोरंकोऽन्यस्तस्माद्चे-
तनः ७९ अस्थिरेणशरीरेणयोऽस्थिरैश्चधनादिभिः । संचिनोतिस्थिरंधर्मंसएकोबुद्धिमान्नरः ८०

८१ ८२ ८३ ८४ ८५ ८६ इतिटीकायांचतुर्दशोऽध्यायः अत्रसुकृतिनांजन्मदेहेवैराजधारणम् षट्चक्र
चिंतनंचैवहरिःपंचदशेऽब्रवीत् १ पूर्वाध्यायांते उषित्वातत्रकल्पांतेभुक्त्वाभोगानमानुषान् प्राप्नोतिपुण्यशेषेणमानुष्यंपुण्यद

तस्मात्सर्वप्रयत्नेनकर्तव्योधर्मसंचयः गच्छध्वंपुण्यमत्स्थानंसर्वभोगसमन्वितम् ८१ इतिधर्मवचःश्रुत्वातंप्रण-
म्यसभांचताम् अमरैःपूज्यमानास्तेस्तूयमानामुनीश्वरैः ८२ विमानगणसंकीर्णाःप्रयांतिपरमंपदम् केचिद्ध
र्मसभायांहितिष्ठंतिपरमादरात् ८३ उषित्वातत्रकल्पांतंभुक्त्वाभोगानमानुषान् प्राप्नोतिपुण्यशेषेणमानुष्यंपु-
ण्यदर्शनम् ८४ महाधनीचसर्वज्ञःसर्वशास्त्रविशारदः पुनःस्वात्मविचारेणततोयातिपरांगतिम् ८५ एतत्ते
कथितंसर्वंत्वयापृष्टंमयालयम् इदंशृण्वन्नरोभक्त्याधर्मराजसभांव्रजेत् ८६ इतिश्रीगरुडपुराणेसारोद्धारे
धर्मराजनगरनिरूपणोनामचतुर्दशोऽध्यायः १४ गरुडउवाच धर्मात्मास्वर्गतिंभुक्त्वाजायतेविमलेकु-
ले अतस्तस्यसमुत्पत्तिंजननीजठरेवद १

र्शनम् पुनःस्वात्मविचारेणततोयातिपरांगतिमित्युक्तम् इदानींगरुडस्तदनुवादपूर्वकंसुकृतिनःसमुत्पत्तिंपृच्छतिधर्मात्माइतिद्वाभ्याम् १

२ अत्रोत्तरंश्रीभगवानुवाच यावदध्यायसमाप्ति ३ ४ ध्यानंयथाकुर्वंतितच्छृणुइति ५ यथायेनविधानेनतत्पित्रोः तस्यमातापित्रोः



यथाविचारंकुरुतेदेहेस्मिन्सुकृतीजनः तथाऽहंश्रोतुमिच्छामिवदमेकरुणानिधे २ श्रीभगवानुवाच
साधुपृष्टंत्वयातार्क्ष्यपरंगोप्यंवदामिते यस्यविज्ञानमात्रेणसर्वज्ञत्वंप्रजायते ३ वक्ष्यामिचशरीरस्यस्वरूपंपार-
मार्थिकम् ब्रह्मांडगुणसंपन्नंयोगिनांधारणास्पदम् ४ षट्चक्रचिंतनंयस्मिन्यथाकुर्वंतियोगिनः ब्रह्मरंध्रे
चिदानंदरूपध्यानंतथाशृणु ५ शुचीनांश्रीमतांगेहेजायतेसुकृतीयथा तथाविधानंनियमंतत्पित्रोःकथया-
मिते ६ ऋतुकालेतुनारीणांत्यजेद्दिनचतुष्टयम् तावन्नालोकयेद्वक्त्रंपापंवपुषिसंभवेत् ७ स्नात्वासचै-
लंसानारीचतुर्थेऽहनिशुध्यति सप्ताहात्पितृदेवानांभवेद्योग्याव्रतार्चने ८ सप्ताहमध्येयोगर्भःसभवेन्मलिनाशा-
यः प्रायशःसंभवंत्यत्रपुत्रास्त्वष्टाहमध्यतः ९ युग्मासुपुत्राजायंतेस्त्रियोयुग्मासुरात्रिषु पूर्वसप्तकमुत्सृज्य-
तस्माद्युग्मासुसंविशेत् १० षोडशर्तुनिशाःस्त्रीणांसामान्याःसमुदाहृताः यावैचतुर्दशीरात्रिगर्भस्तिष्ठतितत्रवै ११

६ पापंयावदिंद्रस्यब्रह्महत्यांसंभवति ७ ८ ९ १० सामान्या गर्भधारणेसाधारणाएव ११ ६९

गुणाविचारादयः भाग्यंऐश्वर्यंतेषांनिधानंवासस्थानंप्राकृतानिभाग्यः १२ पंचमेहनीत्य [illegible]

नतक्षेत्रमोषधीपात्रमिति औषधीनांयवादिधान्यानांपात्रमुत्पत्तिस्थानम् तत्प्रसिद्धंक्षेत्रंयथाकंटकगुल्मादिनिरसनेननतदुपयोगिद्रव्यांतर

मेलनेनजलसेचनेनकृषियोग्यंविधायतस्मिन्नुप्त्वा बीजंवापयित्वास्वामीकर्षकः स्थूलान्नरूपंफलंप्राप्नोति तथाऽत्रापि औषधीपात्रंपुनो

गुणभाग्यनिधिःपुत्रस्तदाजायेतधार्मिकः सानिशाप्राकृतैर्जीवैर्नलभ्येतकदाचन १२ पंचमेहनिनारीणांकार्यंम-
धुरभोजनम् कटुभारंचतीक्ष्णंचत्याज्यमुष्णंचदूरतः १३ ततक्षेत्रमोषधीपात्रंबीजंचाप्यमृतायितम् तस्मि
न्नुप्त्वानरःस्वामीसम्यक्फलमवाप्नुयात् १४ तांबूलपुष्पश्रीखंडैःसंयुक्तःशुचिवस्त्रभृत् . धर्ममादायमनसि
स्रुतल्पंसंविशेत्पुमान् १५ निषेकसमयेयादृक्नरचित्तविकल्पना तादृक्स्वभावसंभूतिर्जंतुर्विशतिकुक्षि
गः १६

त्पत्तिस्थानंतद्गर्भरूपंक्षेत्रंकटुक्षारादिभोजनंपरित्याज्यमाधुर्यभोजनंकारयित्वावीर्यसेचनंचकृत्वातस्मिन्नुप्त्वास्वामीपितासम्य

क्धार्मिकपुत्ररूपंफलंप्राप्नुयादित्यर्थः १४ माधुर्यभोजनादिभिःस्त्रीणांविधाननियममुक्त्वापुरुषाणामाह तांबूलइतिस्रुतल्पंसारदारुमयीमि

त्याद्युक्तप्रकारांशय्यांसंविशेत्स्थितोभूयात् १५ निषेकसमयेरतिकालेयादृशीविकल्पनाशुभाऽशुभावासनाभवतितादृश्येवस्वभावस्योत्पत्ति

र्यस्यसजंतुर्विशतिगर्भेप्रविष्टोभवतिचेतनत्वंजीवः १६

कामोऽभिलाषपूर्तिः १७ तारापतिश्चंद्रः १८ कृतीपुण्यात्मा १९ २० २१ पूर्वकृतइति पूर्वजन्मनिकृतानांतपआदीनांफलस्योदयात्
भोक्ताऽपिभवेत् तथाचस्मृतिः भोज्यंभोजनशक्तिश्चरतिशक्तिर्वरास्त्रियः विभवेदानशक्तिश्चनाल्पस्यतपसःफलमिति २२ यततेयत्नवा-
न्भवति असर्पभूतायांरज्जौसर्पारोपवद्वस्तुन्यवस्तु आरोपोऽध्यारोपः वस्तुसच्चिदानंदाद्वयंब्रह्माक्षित्याद्यज्ञानांतसकलजडसमूहोवस्तु

चैतन्यंबीजभूतंहिनित्यंशुक्रेव्यवस्थितम् कामश्चित्तंचशुक्रंचयदाह्येकत्वमाप्नुयात् १७ तदाद्रावमवाप्नोतियो-
षिद्गर्भाशयेनरः शुक्रशोणितसंयोगात्पिंडोत्पत्तिःप्रजायते १८ परमानंददःपुत्रोभवेद्गर्भगतःकृती भवंति-
तस्यनिखिलाःक्रियाःपुंसवनादिकाः १९ जन्मप्राप्नोतिपुण्यात्माग्रहेषूच्चगतेषुच तज्जन्मसमयेविप्राःप्राप्नुवंति
धनंबहु २० विद्याविनयसंपन्नोवर्द्धतेपितृवेश्मनि सतांसंगेनसभवेत्सर्वागमविशारदः २१ दिव्यांगनादिभो-
क्तास्यात्तारुण्येदानवान्धनी पूर्वकृततपस्तीर्थमहापुण्यफलोदयात् २२ ततश्चयततेनित्यमात्मानात्मवि-
चारणे अध्यारोपापवादाभ्यांकुरुतेब्रह्मचिंतनम् २३

अपवादोनामरज्जुविवर्त्तस्य रज्जुमात्रवद्वस्तुविवर्त्तस्यावस्तुनोऽज्ञाना-
देःप्रपंचस्यवस्तुमात्रत्वम् आभ्यांअध्यारोपापवादाभ्यांतत्त्वंपदार्थंसंशोध्यसर्वंखल्विदंब्रह्मनेहनानास्तिकिंचनइत्यादिश्रुत्युक्तंब्रह्मचिंतनं
कुरुते २३

अस्येति क्षित्यादिष्वन्वयंकरोतीत्यन्वयकारिणोप्यस्यब्रह्मणः असंगावबोधाय असंगोह्ययंपुरुषइतिश्रुत्युक्तः ज्ञानार्थंकथयामीत्य-न्वयः २४ आनात्मविचारणमाह क्षितिरित्यादिभिःस्थूलभूता अपंचीकृताः पांचभौतिकः पंचीकृतपंचभूतोत्पन्नः २५ क्षित्यादिपंचभूता

अस्यासंगावबोधायब्रह्मणोन्वयकारिणः क्षित्याद्यनात्मवर्गस्यगुणांस्तेकथयाम्यहम् २४ क्षितिर्वारिहविर्भोक्ता वायुराकाशएवच स्थूलभूताइमेप्रोक्ताः पिंडोऽयंपांचभौतिकः २५ त्वचाऽस्थिनाडयोरोममांसंचैवखगेश्वर एतेपंचगुणाभूमेर्मयातेपरिकीर्त्तिताः २६ लालापुत्रंनथाशुक्रंमज्जारक्तंचपंचमम् अपांपंचगुणाःप्रो-क्तास्तेजसोऽपिनिशामय २७ क्षुधातृषातथाऽलस्यंनिद्राकांतिस्तथैवच तेजःपंचगुणंतार्क्ष्यप्रोक्तंसर्वत्रयोगिभिः २८ आकुंचनंधावनंचलंघनंचप्रसारणम् चेष्टितंचेतिपंचैवगुणावायोःप्रकीर्त्तिताः २९ घोषश्चिंताचशू-न्यत्वंमोहश्चिंताचसंशयः आकाशस्यगुणाःपंचज्ञातव्यास्तेप्रयत्नतः ३० मनोबुद्धिरहंकारश्चित्तंचेतिचतुष्टयम् अंतःकरणमुद्दिष्टंपूर्वकर्माधिवासितम् ३१ नांगणानाह त्वचेतिपंचभिः २६ २७ २८ २९ ३० पूर्वकर्माधिवासितंपूर्वजन्मकृतैः शुभाऽशुभकर्मभिरधिवासितंशुभाऽशुभवासनायुक्तंभवति बुद्धिःकर्मानुसारिणीतिवचनात् बुद्धिरित्युपलक्षणम् अंतःकरणचतुष्टयमे-वेत्यर्थः ३१

उभयेंद्रियाण्याह श्रोत्रमिति ३२ दिगादयः पंचश्रोत्रादीनां यथाक्रमं देवताः चन्द्रादयश्च वागादीनामिति ३३ ३४ ३५ अथ दशप्राणान् स्थानकर्म ३६ ३७ ३८ ३९ व्यानको वायुः सर्वशरीरव्यापकत्वात् सारांशरसं नयते प्रापयति रसप्रापणप्रकारमेवाह आहार इति त्रिभिः ४० ४१ ४२



श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं ज्ञानेंद्रियाणि च वाक्पाणिपादपायूपस्थानि कर्मेंद्रियाणि च ३२ दिग्वातार्कप्रचेतोश्वि वह्नींद्रोपेंद्रमित्रकाः ज्ञानकर्मेंद्रियाणां च देवताः परिकीर्तिताः ३३ इडा च पिंगला चैव सुषुम्नाख्या तृतीयका गांधारी गजजिह्वा च पूषा चैव यशस्विनी ३४ अलंबुषा कुहूश्चापि शंखिनी दशमी तथा पिंडमध्ये स्थिता ह्येताः प्रधाना दशनाडिकाः ३५ प्राणोपानः समानाख्य उदानो व्यान एव च नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ३६ हृदि प्राणो गुदेऽपानः समानो नाभिमंडले उदानः कंठदेशस्थो व्यानः सर्वशरीरगः ३७ उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः कृकलः क्षुत्करो ज्ञेयो देवदत्तो विजृंभणे ३८ न जहाति मृतं वापि सर्वव्यापी धनंजयः कवलैर्भुक्तमन्नं हि पुष्टिदं सर्वदेहिनाम् ३९ नयते व्यानको वायुः सारांशं सर्वनाडिषु आहारो भुक्तमात्रो हि वायुना क्रियते द्विधा ४० संप्रविश्य गुदे सम्यक् पृथगन्नं पृथक् जलम् ऊर्ध्वमग्नेर्जलं कृत्वा कृत्वाऽन्नं च जलोपरि ४१ अग्नेश्चाधः स्वयं प्राणः स्थित्वाऽग्निं धमते शनैः वायुना ध्मायमानोऽग्निः पृथक्किट्टं पृथग्रसम् ४२ मैः सहितानाह प्राण इति सार्द्धत्रिभिः क्षुत्करः क्षुधाकर्त्ता मृतशोषकारित्वं धनंजयस्य

भिन्नंरसात्पृथक्भूतंकिट्टंमलम् ४३ मलस्यनिर्गमस्थानान्याह कर्णेति ४४ सर्वेप्राणादिवायवः आत्मशक्त्यैवचेष्टंतीत्याह एवमिति सूर्यस्यालोकंप्रकाशमुपलभ्यप्राप्यजनायथास्वस्वकर्मणिप्रवर्त्तंते तथैवात्मसत्तांप्राप्यवायवोऽपीत्यर्थः अयंभावः सूर्योयथाकर्मणिजनान्प्रवर्त्यस्वयंसा-

कुरुतेव्यानकोवायुर्विश्वकुसंप्रापयेद्रसम् द्वारैर्द्वादशभिर्भिन्नंकिट्टंदेहाद्वहिःस्रवेत् ४३ कर्णाक्षिनासिकाजिह्वादंतानाभिर्नखागुदम् गुह्यंशिरोवपुर्लोममलस्थानानिचक्षते ४४ एवंसर्वेप्रवर्त्तंते स्वस्वकर्मणिवायवः उपलभ्यात्मनः सत्तांसूर्यालोकयथाजनाः ४५ इदानींनरदेहस्यशृणुरूपद्वयंखग व्यावहारिकमेकंचद्वितीयंपारमार्थिकम् ४६ तिस्रः कोट्योऽर्द्धकोटीचरोमाणिव्यावहारिके सप्तलक्षाणिकेशाःस्युर्नखाः प्रोक्ताश्चविंशतिः ४७ द्वात्रिंशद्दशनाः प्रोक्ताः सामान्याद्विनतासुत मांसंपलसहस्रंतुरक्तंपलशतंस्मृतम् ४८ पलानिदशमेदस्तुत्वक्पलानिचसप्ततिः पलद्वादशकंमज्जामहारक्तंपलत्रयम् ४९ शुक्रंद्विकुडवंज्ञेयंकुडवंशोणितंस्मृतम् षष्ठ्युत्तरंचत्रिशतमस्थ्नांदेहेप्रकीर्तितम् ५०

क्षितयासंगत्वेन स्थितोभवति तद्वदात्मापीति अनेनात्मविचारणमप्युक्तंभवति ४५ व्यावहारिकं अगम्यंपरमार्थिकंयोगिजनज्ञेयम् ४६ तत्रादौसंख्यामाह तिस्रइति षड्भिःतिस्रःकोट्यःसप्तलक्षाणीत्यगणितानि ४७ ४८ स्थूलमानेनधातुप्रमाणमाह महारक्तंप्राणाधारभूतम् ४९ कुडवंदशमाषकंशोणितंरुतुरुद्भवंगर्भाधानभूतम् ५०

५१ ५२ एवंव्यावहारिकंनिरूप्येदानींपारमार्थिकस्वरूपनिरूपणेनसूक्ष्मस्वरूपेमनःप्रवेशायस्वदेहे तावद्विराड्रूपस्थूलधारणामाह पार
मार्थिकेदेहेहीत्यारभ्ययावदध्यायसमाप्ति गुणाभुवनादयः तानेवाह भुवनानीत्यादि पारमार्थिकेपारमार्थिकस्वरूपप्रकाशिके ५३ ५४ वैराजरूप



नाड्यःस्थूलाश्चसूक्ष्माश्चकोटिशः परिकीर्त्तिताः पित्तंपलानिपंचाशत्तदर्धंश्लेष्मणस्तथा ५१ सततंजायमानंतुविण्मूत्रंचाप्रमाणतः एतद्गुणसमायुक्तंशरीरंव्यावहारिकम् ५२ भुवनानिचसर्वाणिपर्वतद्वीपसागराः आदित्याद्याग्रहाः संतिशरीरेपारमार्थिके ५३ पारमार्थिकदेहेहिषट्चक्राणिभवंतिच ब्रह्मांडेयेगुणाःप्रोक्तास्तेप्यस्मिन्नेवसंस्थिताः ५४ तानहंतेप्रवक्ष्यामियोगिनांधारणास्पदान् येषांभावनयाजंतुर्भवेद्वैराजरूपभाक् ५५ पदाधस्तात्तलंज्ञेयंपादोर्ध्वंवितलंतथा जानुनोःसुतलंविद्धिसक्थिदेशेमहातलम् ५६ तलातलंसक्थिमूलेगुह्यदेशेरसातलम् पातालंकटिसंस्थंचसप्तलोकाःप्रकीर्तिताः ५७ भूर्लोकंनाभिमध्येतुभुवर्लोकंतदूर्ध्वके स्वर्लोकंहृदयेविद्यात्कंठदेशेमहस्तथा ५८ जनलोकंवक्त्रदेशेतपोलोकंललाटके सत्यलोकंब्रह्मरंध्रेभुवनानिचतुर्दश ५९

भाक् वैराजः पुरुषोयोवैभगवा
नुधारणाश्रय इतिभागवतोक्तः स्वयंस्यादित्यर्थः ५५ पूर्वश्लोकोक्तक्रमेणैवसर्वेषांधारणामाह पादेति तदूर्ध्वकेउदरे ५६ ५७ ५८ ५९

त्रिकोणेहृत्पीठकमलांतर्गते तदुक्तंब्रह्मपुराणे हृदिरत्नमयेश्रीमत्सिंहासनगतांबुजेत्रिकोणांतः समासीनंशिवंध्यायेदुमाधरमिति ६०तस्यमध्ये त्रिकोणेपूर्व्येदक्षिणवामरेखासुक्रमेणमेर्वादयः समकुलपर्वताभवंतीति ६१शि रासुनाडिषु ६२ गोमेदः प्लक्षः ६३ ६४रसोन्नस्यलंबिकाकंठांतर्गता ६५

त्रिकोणेसंस्थितोमेरुरधः कोणेचमंदरः दक्षकोणेचकैलासो वामकोणेहिमाचलः ६० निषधश्चोर्ध्वरेखायांदक्षायांगंधमादनः रमणोवामरेखायांसप्तैतेकुलपर्वताः ६१ अस्थिस्थानेभवेज्जंबूः शाकोमज्जासुसंस्थितः कुशद्वीपस्थितोमांसेक्रौंचद्वीपःशिरासुच ६२ त्वचायांशाल्मलीद्वीपोगोमेदोरोमसंचये नखस्थंपुष्करंविद्यात्सागरास्तदनंतरम् ६३ क्षारोदोह्यभवेन्मूत्रेक्षीरक्षीरोदसागरः सुरोदधिःश्लेष्मसंस्थामज्जायांघृतसागरः ६४ रसोदधिंरसोविंद्याच्छोणितंदधिसागरः स्वादूदोलंबिकास्थानेजानीयाद्विनतासुत ६५ नादचक्रेस्थितःसूर्योबिंदुचक्रेचचंद्रमाः लोचनस्थःकुजोज्ञेयोहृदयेज्ञःप्रकीर्तितः ६६ विष्णुस्थानेगुरुंविद्याच्छुक्रेशुक्रोव्यवस्थितः नाभिस्थानेस्थितोमंदोमुखेराहुःप्रकीर्तितः६७

नादबिंदुचक्रेब्रह्मरंध्रादेकैकांगुल्यधोपःस्तःतदुक्तंयोगशास्त्रे एकैकांगुल्यधोधोस्तिरंध्रान्नादंचबिंदुकम् विद्रुमस्फाटिकाकारंसूर्यचंद्रसमप्रभम् इतिज्ञोबुधः ६६ विष्णुस्थानेनाभ्यंतर्गतमणिपूरकचक्रेनाभिस्थानेनाभिगोलकेमंदः शनिः ६७ . ७ ७

वायुस्थानेहृदयादाकंठंवायुस्थानंतस्मिन् एवमुक्तमकारेणासर्वस्वरूपेणसर्वात्मकविराट्स्वरूपेणास्वदेहेचिंतयेत् इतिमूलधारणा ६८ प्रथमष
ट्चक्रचिंतनात्मकसूक्ष्मधारणामाह सदेत्यादि ६९ अजपानुष्ठानंविनासहजश्वासरूपेणभावनीत्यजपामुनीनांमननशीलानांसकल्पंगायत्रीचगुरु

वायुस्थानेस्थितःकेतुःशरीरेग्रहमंडलम् एवंसर्वस्वरूपेणाचिंतयेदात्मनस्तनुम् ६८ सदाप्रभातसमयेबद्धपद्मासनस्थितः
षट्चक्रचिंतनंकुर्याद्यथोक्तमजपाक्रमम् ६९ अजपानामगायत्रीमुनीनांमोक्षदायिनी अस्याःसंकल्पमात्रेणसर्वपापैःप्रमु
च्यते ७० शृणुताक्ष्यंप्रवक्ष्येहमजपाक्रममुत्तमम् यंकृत्वासर्वदाजीवोजीवभावंविमुंचति ७१ मूलाधारःस्वाधिष्ठानंमणिपूरकमे
वच अनाहतंविशुद्ध्याख्यमाज्ञाषट्चक्रमुच्यते ७२ मूलाधारेलिंगदेशेनाभ्यांहृदिचकंठगे भ्रुवोर्मध्येब्रह्मरंध्रेक्रमाच्चक्राणिचिंत
येत् ७३ आधारंतुचतुर्दलानलसमंवासांतवर्णाश्रयं स्वाधिष्ठानमपिप्रभाकरसमंबालांतषट्पत्रकम् रक्ताभंमणिपूरकंदशदलं-
डाद्यंफकारांतकंपत्रैर्द्वादशभिरनाहतपुरंहेमंकठांतावृतम् ७४ पत्रैःसस्वरषोडशैःशशधरज्योतिर्विशुद्धांबुजंहंसेत्यक्षरयुग्मकंद्व्यदलं
रक्ताभमाज्ञांबुजम् तस्मादूर्ध्वगतंप्रभासितमिदंपद्मंसहस्रच्छदंसत्यानंदमयंसदाशिवमयंज्योतिर्मयंशाश्वतम् ७५ गुरवाज्ञानव्य
म् ७० सर्वदाकृत्वाएतदाचरणंनित्यकर्मैवभवति नतुनैमित्तिकमिति जीवभावंविमुंचति ब्रह्मस्वरूपोभवतीत्यर्थः ७१ ७२ ७३ ७४ ७५

७६ ७७ ७८ ७९ ८० अत्रसदाचारप्रमाणयति एतानिति ब्रह्ममयूखान् सर्ववेदमयस्यब्रह्मणः किरणरूपान् तदभिन्नानित्य
र्थः चक्रगतानमरान् षट्चक्रस्थितान् श्रीगणेशादिदेवान् ऋषीणांसंप्रदायमार्गेषुये आरुणादयोमुनयस्तेपिचिंतयंति उपासते तदु

गणेशंचविधिंविष्णुंशिवंजीवंगुरुंततः व्यापकंचपरब्रह्मक्रमाच्चक्रेषुचिंतयेत् ७६ एकविंशत्सहस्राणिषट्शतान्यधि
कानिच अहोरात्रेणश्वासस्यगतिःसूक्ष्मास्मृताबुधैः ७७ हकारेणबहिर्यातिसकारेणविशेत्पुनः हंसोहंसेतिमंत्रेणजीवो
जपतितत्वतः ७८ षट्शतंगणनाथायषट्सहस्रंतुवेधसे षट्सहस्रंचहरयेषट्सहस्रंहरायच ७९ जीवात्मनेसहस्रंच
सहस्रंगुरवेतथा चिदात्मनेसहस्रंचजपसंख्यानिवेदयेत् ८० एतान्चक्रगतान्ब्रह्ममयूखान्मुनयोमरान् सत्संप्रदा
यवेत्तारश्चिंतयंत्यारुणादयः ८१ शुकादयोपिमुनयःशिष्यानुपदिशंतिच अतःप्रवृत्तिमहतांध्यात्वाध्यायेत्सदा
बुधः ८२ कृत्वाचमानसींपूजांसर्वचक्रेष्वनन्यधीः ततोगुरूपदेशेनगायत्रीमजपांजपेत् ८३

क्तंवेदस्तुतौ
उदरमुपासतेयऋषिवर्त्मसुकूर्पदृशःपरिसरपद्धतिंहृदयमारुणयोदहरमिति ८१ शिष्यान्परीक्षितादीन् तदुक्तंद्वितीयेसयोमु
क्तिस्थले स्वपार्ष्णिनापीड्यगुदंततोनिलंस्थानेषुषट्सून्नमयेज्जितक्लमः नाभ्यांस्थितंहृद्यधिरोप्यतस्मादुदानगत्योरसितंनयन्मुनिः ततो

नुसंधाय्यधियामनस्वांस्वतालुमूलंध्यानकेनेनयेत तस्माद्भ्रुवोरंतरमुन्नयेतानिर्भिद्यमूर्धनाविसृजेत्परंगतइति एतंद्व्यारव्यानंश्रीश्रीधरस्वामिभिः
कृतंज्ञातव्यम् ८२अनन्यधीः एकाग्रचित्तःसन् ८३रंध्रेब्रह्मरंध्रांतर्गतेअधोमुखपंकजेश्रीगुरुंध्यायेत् तदुक्तंरुद्रयामले सहस्रदलपंकजे सकलशीतर
श्मिप्रभे वराभयकरांबुजंविमलगंधपुष्पांबरम् प्रसन्नवदनेक्षणंसकलदेवतारूपिणंस्मरेच्छिरसिहंसगंजननव्याधिवैद्यंगुरुमिति ८४ पंचोप
चारैःमनसाकल्पितैः पंचभूतात्मकगंधपुष्पधूपदीपनैवेद्यैः तद्यथा लंपृथिव्यात्मकंगंधंसम० हंआका० पुष्पं० यंवाय्वा० धूपं० रंतेजा० दीपं० वं

अधोमुखेततोरंध्रेसहस्रदलपंकजे हंसगंश्रीगुरुंध्यायेद्वराभयकरांबुजम् ८४ क्षालितंचिंतयेद्देहंतत्पादामृतधारया पं
चोपचारैःसंपूज्यप्रणमेत स्तवेनच ८५ततःकुंडलिनींध्यायेदारोहादवरोहतः षट्चक्रकृतसंचारांसार्धत्रिवलयांस्थितां
म् ८६

अमृ० नैवेद्यं० इतितत्स्तवेन गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः गुरुःसाक्षात्परंब्रह्मतस्मैश्रीगुरवेनम इतिगुरुस्तो
त्रेण ८५परात्परब्रह्मकलांकुंडलिनीं आरोहेतुप्रकाशमानांअवरोहेन अमृतंस्रवंतींध्यायेत् तदुक्तंयोगशास्त्रे प्रकाशमानांप्रथमेप्रयाणेप्रति
प्रयाणेप्यमृतायमानां अतःपदंव्योमसुसंचरंतींध्यायेत्सदाकुंडलिनींपराख्यामिति आरोहावरोहश्चशंकरस्वामिचरणैरप्युक्तोऽस्तिसौंदर्यल 
हर्यां तद्यथा महींमूलाधारेकमपिमणिपूरेहुतवहमिति आरोहः अवरोहस्तु सुधाधारासारैश्चरणयुगलांतर्विगलितैरिति एतदेवाहषडिति

मूलाधारादिषट्चक्रेषुकृतःसंचारः आरोहावरोहक्रमेणगमनंययासार्धत्रिवलयाप्रसुप्तभुजंगाकारांमूलाधारेस्थिताम् ८६ धाममत्पाप्तिस्थानंरंध्रा
द्बहिर्गतंब्रह्मरंध्राद्ब्रह्मलोकांतंप्रासंतेनययासुषुम्नामार्गेणगतायोगिनःविष्णोःपदंममस्वरूपमेवयांति पुनर्मृत्युमुखेसंसारेनपतंतीत्यर्थः तदुक्तंवेदस्तुतौ
ततउदगादनंततनवधामशिरःपरमंपुनरिहयत्समेत्यनपतंति कृतांतमुखेइति ८७मच्चितितंमयाश्रीकृष्णरूपेणध्यातंतदुक्तंदशमेसमतिनमेः ध्याये ब्राह्मेमुहू

ततोध्यायेत्सुषुम्नाख्यंधामरंध्राद्बहिर्गतम् ययातेनगतायांतितद्विष्णोःपरमंपदम् ८७ ततोमच्चिंतितंरूपंस्वयंज्यो
तिःसनातनम् सदानंदंसदाध्यायेन्मुहूर्तेब्राह्मसंज्ञके ८८ एवंगुरूपदेशेनमनोनिश्चलतांनयेत् नतुस्वेनप्रयत्नेनत
द्विनापतनंभवेत् ८९ अंतर्यागंविधायैवंबहिर्यागंसमाचरेत् स्नानसंध्यादिकंकृत्वाकुर्याद्धरिहरार्च्चनम् ९०

र्तेचोत्थायवार्युपस्पृश्यमाधवः दध्यौप्रसन्नकरणआत्मानंतमसःपरम् एकंस्वयंज्योतिरनन्यमव्ययंस्वसंस्थयानित्यनिरस्तकल्मष
म्ब्रह्माख्यमस्योद्भवनाशहेतुभिःस्वशक्तिभिर्लक्षितभावनिर्वृतमिति ८८ तद्विनातद्गुरूपदेशंविनापतनंसंसारेजन्ममरणमेवभवेन्नतुमोक्षः
तदुक्तंश्रीशुकेन विजितहृषीकवायुभिरदांतमनस्तुरंगयइहयतंति यंतुमतिलोलमुपायखिदःव्यसनशतान्विताःसमवहायगुरोश्चरणंवणिजइवा
जसंत्यकृतकर्णधराजलधौ ८९ अंतर्यागंमानसोपचारैःपूर्वोक्तचक्रेषुश्रीगणेशादिपूजनंबहिर्यागंयथालब्धोपचारैःश्रीहरिहरपूजनम् ९० ५

देहाभिमानिनांतुनित्यंप्रवणत्वस्यदुर्घटत्वाद्दुर्लभोमोक्षः मद्भक्तानांतुमत्प्रसादादनायासतएवमुक्तिर्भवतीत्याह देहेतिचतुर्भिः ९१ समीचीनःश्रेष्ठत्वः
९२ ब्रह्मादिभिर्निश्चितत्वात् तदुक्तंहितीये नत्यतोन्यःशिवःपंथा हृशतः संसृताविह वासुदेवेभगवतिभक्तियोगोयतोभवेत् भगवान्ब्रह्मकार्त्स्न्येन
त्रिरन्वीक्ष्यमनीषया तदध्यवस्यत्कूटस्थोरतिरात्मन्यतोभवेत् ९३ नावसीदतिपुनर्जन्मादिदुःखंनप्राप्नोति किंतु मुक्तोभवतीत्यर्थः ९४ यथा

देहाभिमानिनामंतर्मुखीवृत्तिर्नजायते अतस्तेषांतुमद्भक्तिःसुकरामोक्षदायिनी ९१ तपोयोगादयोमोक्षमार्गाःसंतित
थापिच समीचीनस्तुमद्भक्तिमार्गःसंसरतामिह ९२ ब्रह्मादिभिश्चसर्वज्ञैरयमेवाविनिश्चितः त्रिवारंवेदशास्त्राणिवि
चार्यचपुनःपुनः ९३ यज्ञाद्योपिसद्धर्मान्निःशोभनकारकाः फलरूपाचमद्भक्तिस्तांलब्ध्वानावसीदति ९४ एवमाचार-
पंतार्क्ष्यकरोतिसुकृतीनरःसयोगेनचमद्भक्त्यामोक्षंयातिसनातनम् ९५ इतिगरु॰ सा॰ सुकृतिजनजन्माचरणनि
रू॰ पंचदशोऽध्यायः १५ गरुडउवाच श्रुतामयादयासिंधोत्वज्ज्ञानाज्जीवसंसृतिः अधुनाश्रोतुमिच्छामिमोक्षो
पायंसनातनम् १
विचारंकुरुतेदेहेस्मिन्सुकृतीनरइतिप्रश्नस्योत्तरंसमाधायोपसंहरति एवमिति सनातनंविदेहकैवल्यम् ९५
इतिटी॰ पंचदशोऽध्यायः १५ प्रोक्तापंचदशाध्याये पापपुण्यात्मिकागतिः षोडशेस्मिन्हरिःप्राह मोक्षोपायंसतांमतम् १ पूर्वाध्यायेंतेमोक्षंयाति



८०

सनातनमित्युक्तंतादिदानींमोक्षोपायमेवपृच्छति ॥ भगवन्निति चतुर्भिः हेभगवन्निह असारेसंसारे जन्ममरणानामनंतत्वात् सदादुःखातुराणांमोक्षोपायमजानंतांजीवानांकेनोपायेनमोक्षःस्यादितिमेवदेतिसमुच्चयार्थः १ २ ३ ४ अत्रोत्तरंश्रीभगवानुवाच हेगरुडप

भगवन्देवदेवेशशरणागतवत्सल असारेघोरसंसारे सर्वदुःखमलीमसे २ नानाविधशरीरस्थाअनंताजीवराशयः जायंतेचम्रियंतेचतेषामंतोनविद्यते ३ सदादुःखातुराएवनसुखीविद्यतेक्वचित् केनोपायेनमोक्षेशमुच्यंतेवदमेप्रभो ४ श्रीभगवानुवाच शृणुतार्क्ष्यप्रवक्ष्यामियन्मांत्वंपरिपृच्छसि यस्यश्रवणमात्रेणसंसारान्मुच्यतेनरः ५ अस्तिदेवःपरब्रह्मस्वरूपीनिष्कलःशिवः सर्वज्ञःसर्वकर्ताचसर्वेशोनिर्मलोह्यः ६ स्वयंज्योतिरनाद्यंतोनिर्विकारःपरात्परः निर्गुणःसच्चिदानंदस्तदंशाज्जीवसंज्ञकः ७

[illegible]स्वरूपीकश्चिद्देवोस्ति ५ ६ तस्यअनाद्यविद्योपहतात् अविद्यायांप्रतिबिंबात् अंशइवांशस्तस्माज्जीवइतिसंज्ञोभवति अग्ने
देर्दृष्टांतः ७

यथाग्नेर्विस्फुलिंगकाइति यदि असौजीवोनिजानंदस्वरूपंविस्मृत्यदेहधर्मानात्मन्यारोपयति तदाअस्यानेकयोनिषुमोक्षगंधोपिनास्ति यदा-
मानवोभूत्वाज्ञानीभवेत् ज्ञानंनामब्रह्मैवाहंसमः शांतः सच्चिदानंदलक्षणः नाहंदेहोहंसरूपोज्ञानमित्युच्यतेबुधैः इत्यलक्षणःस्या
त्तदामोक्षंप्राप्नोतीतिसमस्मेनसंबंधः अथायंवेदांतसिद्धांतः यथांधकारादौविकाररहितेरज्ज्वादौसर्पाद्यारोपणंकृत्वाभयकंपादिकंवहे-
त् एवमात्माप्यस्मिन् जीवत्वमारोप्यसाहंकृतायंपरिच्छिन्नंज्ञात्वादुःखसागरेमग्नोभवति यदाशास्त्राचार्यप्रसादेनवाक्यार्थज्ञान

अनाद्यविद्योपहितायथाग्नौविस्फुलिंगकाः देहाद्युपाधिसंभिन्नास्तेकर्मभिरनादिभिः ८ सुखदुःखप्रदैः पु
ण्यपापरूपैर्नियंत्रिताः तत्तज्जातियुतंदेहमायुर्भोगंचकर्मजम् ९

मुत्पन्नंभवति तदाविवेकचक्षुषास्वात्मानम
खंडानंदज्ञानैकरूपंसंपश्यन् ततोनाहंजीवः परमात्माहमितिज्ञात्वाभयदुःखादिरहितःसन्सुखीभवेत् यथाचजलस्थसूर्यांशोजलस्यनि-
मित्तस्यापायेसूर्यमेवगत्वातेनैवरूपेणपुनर्नागच्छति यथाचबाह्यघटाद्युपाधिपरिच्छिन्नोघटाकाशोमुख्याकाशांशःसन् घटादेर्निमित्तस्या
पायेमुख्याकाशंप्राप्यपुनर्ननिवर्तते एवंलिंगशरीरावच्छिन्नःपरमात्मनोंशःमायिकलिंगशरीरापायेपरमात्मानंप्राप्यननिवर्तते किंतु त ८१
त्वज्ञानान्मोक्षोभवतीति तथाचोक्तंश्रीभागवतेद्वादशस्कंधे घटेभिन्नेयथाकाश आकाशःस्याद्यथापुरा एवंदेहेमृतेजीवोब्रह्मसंपद्यतेपुनरित्य-
ध्यायार्थः ८ ९

१० ११ १२अस्मिन्नध्यायेप्रथमंज्ञानहेतुंनरत्वंस्तुत्वाततो ज्ञानजनकंवैराग्यंनिरूप्यततोज्ञानवैराग्यरहितान्दांभिकान्विगर्ह्यततस्तत्वज्ञाना-
न्मोक्षोभवतीतिप्रतिपाद्य अंतेज्ञानिनामातुरकृत्यंनिरूपयति अनेनैवक्रमेणाह शरीरिणांजीवानां अन्यत्रपश्वादि शरीरेषुज्ञानलाभोनभ

प्रतिजन्मप्रपर्यंतेतेषामपिपरंपुनः सप्नूक्ष्मलिंगशरीरमामोक्षादक्षरंस्थिरं १० स्थावराःकृमयश्चाब्जाःपक्षिणः
पशवोनराः धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम् ११ चतुर्विधशरीराणिधृत्वामुक्त्वासहस्रशः सु-
कृतान्मानवोभूत्वाज्ञानीचेन्मोक्षमाप्नुयात् १२ चतुराशीतिलक्षेषुशरीरेषुशरीरिणाम् नमानुषंविनान्यत्र
तत्वज्ञानंतुलभ्यते १३ अत्रजन्मसहस्राणांसहस्रैरपिकोटिभिः कदाचिल्लभतेजंतुर्मानुष्यंपुण्यसंचयात् १४
सोपानभूतंमोक्षस्यमानुष्यंप्राप्यदुर्लभम् यस्तारयतिनात्मानंतस्मात्पापतरोत्रकः १५ नरःप्राप्योत्तरंजन्मल
ब्ध्वाचेंद्रियसौष्ठवम् नवेत्त्यात्महितंयस्तुसभवेद्ब्रह्मघातकः १६ वेदित्यर्थः १३ ज्ञानहेतोर्मानुषशरीरस्यदुर्लभ

तामाह अत्रेति १४ दुर्लभंप्राप्यापियोमोक्षोपायंनकरोति सतुमहापातक्येवेत्याह सोपानभूतमोक्षस्यसाधनरूपम् १५ उत्तरंसर्वोत्तमं-
ब्राह्मणादिजन्मसौष्ठवंइंद्रियाणामप्रतिहतशक्तित्वंलब्ध्वापियआत्महितंमोक्षोपायंनजानाति सत्वात्मघातकःस्वस्यैवनाशकर्तेत्यर्थः१६

विनादेहेननरशरीरंसंयोगंविनाकस्यापिदेवादिजीवस्यापिपुरुषार्थोमोक्षोनास्ति इतिव्यवहारमार्गोपिधनंविनासबलशरीरंविनाच
तीर्थाटनादिपुरुषार्थोनास्ति तस्माद्धेतोर्ह्ययंरक्षेत् असत्कर्मसु नैनियोजयेदित्यर्थः किंतु पुण्यकर्माणिसाधयेदिति १७ आत्मानरदेहःसर्व
स्यमोक्षादेःपात्रंभवति अतस्तस्यरक्षणेयत्नंयोगाभ्यासमाचरेत् भद्राणिसत्संगात्मध्यानादिबहुकल्याणानि १८ गता

विनादेहेनकस्यापिपुरुषार्थोनविद्यते तस्माद्देहंधनंरक्षेत्पुण्यकर्माणिसाधयेत् १७ रक्षयेत्सर्वदात्मानमात्मा
सर्वस्यभाजनम् रक्षणेयत्नमातिष्ठेज्जीवन्भद्राणिपश्यति १८ पुनर्ग्रामःपुनःक्षेत्रंपुनर्वित्तंपुनर्गृहम् पुनः
शुभाशुभंकर्मनशरीरंपुनःपुनः १९ शरीररक्षणोपायाःक्रियन्तेसर्वदाबुधैः नेच्छन्तिचपुनस्त्यागम
पिकुष्ठादिरोगिणः २० तद्गोपितंस्याद्धर्मार्थंधर्मोज्ञानार्थमेवच ज्ञानंतुध्यानयोगार्थमचिरात्प्रविमुच्य
ते २१

अपिग्रामादयस्तुपुनरप्यायांति नरशरीरंतुपुनःपुनर्नायाति अतोरक्षेदितिपूर्वेणैवसंबं-
धः १९ उपायाःमृत्योर्वंचनायसमाध्यादयः रोगिणोऽपित्यागंतुनेच्छंति ज्ञानहेतोर्नरशरीरस्यपुनःप्राप्तेर्दुर्लभत्वा-
दितिभावः २० ननुअनित्यस्यरक्षणंकिमर्थमितिचेत्तत्राह तदिति २१

आत्मैवस्यात्मनोबंधुरितिधियामुहुर्मुहुरितिवचनात् स्वयमेवात्मानंतारयेदित्याह आत्मैवेति अहितेभ्यः असत्कर्मदुःसंगादिभ्यः २२ इहैवनरशा-
रीरएवचिकित्सांदूरीकरणोपायंनिरौषधंपश्चाद्देहं २३ अतोस्मिन्नेवसबलनरशरीरेतत्वाभ्यासंकुर्यादित्याह व्याघ्रीवेतित्रिभिः यावज्जरादयोनायांति याव
द्यदेहस्तिष्ठति स्वस्थोभवतितावत्तत्वंसमभ्यसितव्यमित्रयाणांसंबंधः २४ यदितारुण्येविषयान्भुक्त्वावार्धकेतत्वाभ्यासंकरिष्यामीतिविचारस्तुव्यर्थएवेत्याह
संदीप्तेइतियथासंदीप्तभवनस्यशमनंनवखानितकूपोदकेननसंभवति यथाजरादिषुतत्वाभ्यासंहरिस्मरणंचनस्यादतः स्वस्थावस्थायामेव-

आत्मैवयदिनात्मानमहितेभ्योनिवारयेत् कोन्योहितकरस्तस्मादात्मानंतारयिष्यति २२ इहैवनरकव्याधेश्चिकित्सांनकरोति
यः गत्वानिरौषधंदेशंव्याधिस्थः किंकरिष्यति २३ व्याघ्रीवास्तेजराचायुर्यातिभिन्नघटांबुवत् निघ्नंतिरिपुवद्रोगास्त
स्माच्छ्रेयः समभ्यसेत् २४ यावन्नाश्रयतेदुःखंयावन्नायांतिचापदः यावन्नेंद्रियवैकल्यंतावच्छ्रेयः समभ्यसेत् २५

श्रेयः समभ्यसेदित्यर्थः तदुक्तंभागवते [illegible] यावत्स्वस्थमिदंशरीरमरुजंयावज्जरादूरतोयावच्चेंद्रियशक्तिरप्रतिहतायावत्क्षयोनायु
षः आत्मश्रेयसितावदेवविदुषाकार्यःप्रयत्नोमहान्संदीप्तेभवनेतुकूपखननंप्रत्युद्यमः कीदृशइति उक्तंचगौतमेनापि कृष्णत्व
दीयपदपंकजपंजरांतेत्र्यद्यैवमेविशतुमेमानसराजहंसः प्राणप्रयाणसमयेकफवातपित्तैः कंठावरोधनाविधौस्मरणंकुतस्तेइति २५२६

ग·पु·टी· २६ वैराग्योत्पादकवचनान्याह कालइत्यादीनि हितंमोक्षोपायंवेत्त्यपीतिनहंतइतिस्वेदे मत्कृत अहितमेवाचरतीति २७ तदुक्तंभर्तृह अ·
८३ रिणा व्याघ्रीवेतिपंचश्लोकाशयः व्याघ्रीवतिष्ठतिजरापरितर्जयंतीरोगाश्चशत्रवइवप्रहरंतिदेहम् आयुश्चसंस्रवतिभिन्नघटादिवांभोलोकस्त १६
थाप्यहितमाचरतीतिचित्रम् आदित्यस्यगतागतैरहरहः संक्षीयतेजीवनंव्यापारैर्बहुभारकार्यगुरुभिः कालोनविज्ञायते दृष्ट्वाजन्मजराव

यावत्तिष्ठतिदेहोयंतावत्तत्त्वंसमभ्यसेत् संदीप्तकोणभवनेकूपंखनतिदुर्मतिः २६ कालोनज्ञायतेनानाकार्यैः संसार
संभवैः सुखंदुःखंजनोहंतनोवेत्तिहितमात्मनः २७ जातानार्त्तान्मृतानापद्ग्रस्तान्दृष्ट्वाचदुःखितान् लोको-
मोहसुरांपीत्वानबिभेतिकदाचन २८ संपदःस्वप्नसंकाशायौवनंकुसुमोपमम् तडिच्चपलमायुष्यंकस्यस्या-
ज्ज्ञानतोधृतिः २९ शतंजीवितमत्यल्पंनिद्रालस्यैस्तदर्धकम् बाल्यरोगजरादुःखैरल्पंतदपिनिष्फलं ३०

पत्तिमरणंचत्रासश्चनोत्पद्यतेपीत्वामोहमयींप्रमादमदिरामुन्मत्तभूतंजगत् २८ संपदादयःस्वप्नादिवज्जानतः कस्यविवेकिनःधृतिःस्या
न्नकस्यापीत्यर्थः २९ शतमितितदुक्तंभागवते बालान्धतिमल्हादेन पुंसोवर्षशतंह्यायुस्तदर्धंचाजितात्मनः निष्फलंयदसौरात्र्यांशेतेंधंप्रापित ८३
स्तमः मुग्धस्यबाल्येकौमारेक्रीडतोयातिविंशतिः जरयाग्रस्तदेहस्ययात्यकल्पस्यविंशतिः दुरापूरेणकामेनमोहेनचबलीयसा शेषंगृहेषुसक्तस्य
प्रमत्तस्यापयातिहीति ३०

प्रारब्धव्येप्रारब्धुंयोग्येमोक्षोपायेजागर्त्तव्येपरब्रह्मचिंतनेभयस्थानेसंसारेविश्वस्तव्यःविश्वासार्होनरःकःनहंन्यते यमेनअपितुसर्वएवे-
त्यर्थः हाइतिकरुणयाऽनुतापः ३१ आक्रम्यजीवंवशीकृत्यास्थितेदेहेजीवेनसहैवजलबुद्बुदसमेसतिनिर्भयः कथंतिष्ठति ३२ अहितेपरिणा
मेविषोपमे विषयेहितंममेष्टलाभमिदमितिसंज्ञायस्यति अध्रुवेदेहादौ अनर्थेदंभानृतादिपंदशानर्थमूलेधने अर्थः ममप्रयोजनंसिद्धं-

प्रारब्धव्येनिरुद्योगोजागर्त्तव्येप्रसक्तकः विश्वस्तव्योभयस्थानेहानरःकोनहन्यते ३१ तोयफेनसमेदेहेजीवे
नाक्रम्यसंस्थिते अनित्यप्रियसंवासेकथंतिष्ठतिनिर्भयः ३२ अहितेहितसंज्ञःस्यादध्रुवेध्रुवसंज्ञकः अनर्थेचार्थ
विज्ञानः स्वमर्थंयोनवेत्तिसः ३३ पश्यन्नपिप्रस्खलतिशृण्वन्नपिनबुध्यति पठन्नपिनजानातिदेवमा
याविमोहितः ३४ तन्निमज्जज्जगादिदंगंभीरेकालसागरे मृत्युरोगजराग्राहैर्नकश्चिदपिबुध्यते ३५

इतिसंज्ञानंयस्यईदृशोयोनरःस्यात् सस्वंअर्थंमुक्तिप्रदं आत्मज्ञानस्वरूपंस्वप्रयोजनंनैववेत्ति ३३ अहोदेवमायाबलमित्याह
पश्यन्नपिआत्मज्ञानान्मोक्षोभवतीति जानन्नपिप्रस्खलति मोक्षमार्गाद्भ्रष्टोभवति तदाचरणंविनेत्यर्थः ३४ इदंजगन्मरणादिग्रा
हैः कारणभूतैःकालसागरेनिमज्जत्निमग्नोभवति तदपिनबुध्यत्यहो ३५

विशीर्णोगलितोयथानज्ञायते तथाकालोपिसूक्ष्मगतित्वात् ३६ आयुरपिकालवत्क्षीयमाणंनलक्ष्यतेत्याह वेष्टनंरोधनंयुज्यतेकु
ड्यादिभिः कर्तुंशक्यते एवमघटघटनातुभवेदपिपरंतु आयुषिआयुर्गमनेआस्थास्थिरतानयुज्यतेइत्यर्थः ३७ येनकालेनअ

प्रतिक्षणमयंकालः क्षीयमाणोनलक्ष्यते आमकुंभइवांभस्थोविशीर्णोनविभाव्यते ३६ युज्यतेवेष्टनंवायो
राकाशस्यचखंडनम् ग्रथनंचतरंगाणामास्थानायुषियुज्यते ३७ पृथिवीदह्यतेयेनमेरुश्चापिविशीर्यते
शुष्यतेसागरजलंशरीरस्यचकाकथा ३८ अपत्यंमेकलत्रंमेधनंमेबांधवाश्चमे जल्पंतमितिमर्त्यांजंहंतिका
लवृकोबलात् ३९ इदंकृतमिदंकार्यमिदमन्यत्कृताकृतम् एवमीहासमायुक्तंकृतांतःकुरुतेवशम् ४० श्वःका
र्यमद्यकुर्वीतपूर्वाण्हेचापराण्हिकम् नहिमृत्युःप्रतीक्षेतकृतंवाप्यथवाकृतम् ४१

पारिमितापृथिव्याद
योऽपिनश्यंति तदासमवितस्तिकस्यकावार्तेत्याह पृथिवीति ३८ स्वभक्ष हननेकालस्य दयालेशोऽपिनास्तीत्याह अपत्यमिति मे
मेइत्यजवचनानुकरणंमर्त्योनरः सएवाजस्तम् ३९ कालकृतामपिनप्रतीक्षतेइत्याह इदमिति ४० अतोमोक्षकार्येविलंबोनकार्यइत्या
ह श्वइति ४१

सामंतस्वागतंमृत्युशत्रुंमत्यधिष्ठोऽसि स्थितोऽसि अतस्त्रातारंपरमेश्वरम् ४२ पशिपृक्त मांसपिंडवन्मृत्युर्मानवमश्नातीत्याह तृष्णेति ४३मृ
त्यो: सर्वत्रतुल्यतामाह बालानिति आविशते अवश्यमायाति तदुक्तंश्रीभागवते मृत्युर्जन्मवतांवीरदेहेनसहजायते अद्यवाब्दशतांतेवामृ
त्युर्वैप्राणिनांध्रुवमिति ४४ सहचर:स्वदेहोऽपिजीवेनसहनोपयाति तर्हिएयक्स्थितानांस्त्रीपुत्रादीनांकिंप्रयोजनमित्याह स्वदेहमिति

जराद्दर्शितपंथानंप्रचंडव्याधिसैनिकम् मृत्युशत्रुमधिष्ठोसित्रातारंकिंनपश्यसि ४२ तृष्णासूचीविनिर्भिन्नंसिक्तंविषयस
र्पिषा रागद्वेषानलेपक्वंमृत्युरश्नातिमानवम् ४३ बालांश्चयौवनस्थांश्चवृद्धान्गर्भगतानपि सर्वानाविशतेमृ
त्युरेवंभूतमिदंजगत् ४४ स्वदेहमपिजीवोयमुत्क्रम्यायातियमालयम् स्त्रीमातृपितृपुत्रादिसंबंध: केनहेतुना
४५ दु:खमूलंहिसंसार: सयस्यास्तिसदु:खित: तस्यत्याग: कृतोयेनससुखीनापर: क्वचित् ४६ प्रभवंसर्वदु:
खानामालयंसकलापदाम् आश्रयंसर्वपापानांसंसारंवर्जयेत्क्षणात् ४७ स्त्रीपुत्रादिसमुदायरूपसंसारस्यैवदु:खापत्स
र्वपापानांमूलत्वात्सुखेप्सुस्तदासक्तिमनसाऽपिपरित्यजेत् संसक्तस्तुकदापिनमुच्यतइत्याहदु:खमूलमितित्रिभि: त्यागोऽत्रमनसै
वयन्मनसैवकृतंतदेवकृतंभवति नशरीरेणेतिश्रुते: तथाक्तंचूडामणौयापिधिशिखिध्वयस्यमनस्त्यागएवांगीकृतइति ४८ प्रभवंउत्पत्तिस्थानम्
आश्रयं वृद्धिस्थानम् ४७

गु·पु·टी· लोहाद्पाशैस्तु शरीरेणबद्धः सतु दृश्यमानत्वात् परेणापिमुच्यते पुत्रादिपाशैर्मनसाबद्धः केनापिनमुच्यते अदृश्यत्वात् ४८ अतः पुत्रादिषु अ·
८५ स्नेहसंबंधात् तद्गतदुःखशोकादिभिर्व्यथितोभवति अतस्तंनकुर्यादित्याह यावंत इतिशोकरूपाः शंकवः कीलकानिखन्यंतेनिपात्यंते ते १६

लोहदारुमयैःपाशैःपुमान्बद्धोविमुच्यते पुत्रदारमयैःपाशैर्मुच्यतेननकर्हिचित् ४८ यावंतः कुरुतेजंतुः संबंधान्मनसःप्रियान् तावंतोऽस्यनिखन्यंते हृदयेशोकशंकवः ४९ वंचिताशेषवित्तैस्तैर्नित्यंलोकोविनाशितः हाहंतविषयाहारैर्देहस्थेंद्रियतस्करैः ५० मांसलुब्धोयथामत्स्योलोहशंकुंनपश्यति सुखलुब्धस्तथादेहीयमबाधांनपश्यति ५१

षामपगमे तन्नाशादिशोकानुपगमादित्यर्थः ४९ वंचितान्यशेषधनानि यैः विषयानाहर्तुंशीलंयेषांते पक्षेविषयेभ्योधनमा
हरंति तैर्विषयाहारास्तैस्तस्करैर्लोकोनित्यंविनाशितः हाहंत इतिखेदे ५० किंच परिणामेविषोपमंविषयसुखासक्तः पुमा ८०
न्मत्स्योबडिशदुःखमिवयमयातनांप्राप्नोतीत्याह मांसलुब्ध इति ५१

हिताहितं प्रवृत्तिनिवृत्तिंहितम् अमानित्वमदंभित्वमहिंसाक्षांतिरार्जवम् आचार्योपासनंशौचंस्थैर्यमात्मविनिग्रहः इत्यादिपंचश्लोके
गीतायामुक्तं तत्वज्ञानसाधनं तस्मिन्प्रवृत्तिंच अहितम् प्रवृत्तिंचनिवृत्तिंचजनानाविदुरासुराः नशौचंनापिचाचारोनसत्यंतेषुविद्यतेइत्या
दिद्वादशश्लोकैर्भगवतोक्तमासुरभावंतस्मिन्निवृत्तिंचनजानंतः अतएवनित्यंजन्मनिजन्मनि उन्मार्गमासुरमार्गंतंप्रतिगच्छंतियेतेउद

हिताहितंनजानंतोनित्यमुन्मार्गगामिनः कुक्षिपूरणनिष्ठायेतेनरानारकाःखग ५२ निद्रादिमैथुनाहाराःसर्वेषां
प्राणिनांसमाः ज्ञानवान्मानवःप्रोक्तोज्ञानहीनःपशुःस्मृतः ५३ प्रभातेमलमूत्राभ्यांक्षुत्तृड्भ्यांमध्यगेरवौ रात्रौ
मदननिद्राभ्यांबाध्यंतेमूढमानवाः ५४ स्वदेहधनदारादिनिरताःसर्वजंतवः जायंतेचम्रियंतेचहाहंताज्ञान
मोहिताः ५५ तस्मात्संगःसदात्याज्यःसर्वस्त्यक्तुंनशक्यते महद्भिःसहकर्त्तव्यःसंतःसंगस्यभेषजम् ५६ रंभरान

रनरकेनिपतंतीत्यर्थः उक्तंच आसुरंभावमापन्नामूढाजन्मनिजन्मनि मामप्राप्यैवकौंतेयततोयांत्यधमांगतिम् ५२ अतश्चहिताहित
ज्ञानहीनःसकलप्राणिसाधारणधर्ममूढःपशुरेवेत्याह निद्रादीति ५३ किंच देहधर्मैरभिभूतानांमूढानांहिताहितज्ञानानुसंधानावसरोपिनास्ती
त्याह प्रभातइति ५४ अतोदेहाद्यासक्तानांज्ञानसाधनमोक्षरहितानांवर्षाकृमीणामिवतेषांवृथैवजन्ममरणेइत्याह स्वइति ५५ अतःसंगोदेहा
द्यासक्तिरूपःयदिसर्वःपरमहंसवत्त्यक्तुंनशक्यतेतदामहतांकर्त्तव्यःतेहिपूर्वकृतसंगरोगभेषजास्तन्निवर्तकाभवंतीत्यर्थः ५६

किंच सत्संगादेवसन्मार्गदर्शनंभवति नान्यथेत्याह सत्संगइति सतांतत्वज्ञानिनांसंगस्तुस त्संप्रदायदर्शकत्वादेकंनयनंविवेकश्च आ
त्मस्वरूपस्यानित्यत्वंदेहादेरनित्यत्वदर्शकत्वाद्द्वितीयनयनंचयस्यनास्तीसोंधःअमार्गगःवेददूषितभ्रष्टमार्गगतःकथंनस्यादपितुस्यादेवेत्यर्थः५७
एवंवैराग्योत्पादकवचनान्युक्त्वातद्रहितान्दांभिकान्निंदति स्वस्ववर्णाश्रमादिधर्माणांदांभिकत्वेनाचरणान्मुक्तिर्नास्ति किंतुतत्वज्ञानादेवेत्याह

सत्संगश्चाविवेकश्चनिर्मलंनयनद्वयम् यस्यनास्तिनरःसोंऽधःकथंनस्यादमार्गगः ५७ स्वस्ववर्णाश्रमाचारनिरताःसर्वमा
नवाः नजानंतिपरंधर्मंवृथानश्यंतिदांभिकाः ५८ क्रियायासपराःकेचिद्व्रतचर्यादिसंयुताः अज्ञानसंवृतात्मानःसंचरंतिप्र
चारकाः५९ नाममात्रेणसंतुष्टाःकर्मकांडरतानराः मंत्रोच्चारणहोमाद्यैर्भ्रामिताःक्रतुविस्तरैः ६० एकभुक्तोपवासाद्यैर्नि
यमैःकायशोषणैः मूढाःपरोक्षामिच्छंतिममायाविमोहिताः ६१ स्वस्वेतित्रयोदशभिःपरंपरमार्थनिष्ठंमोक्षधर्मंअतोदांभि
कामिथ्याचारास्तेनपश्यंति मोक्षस्यालाभाद्वृथाजन्ममरणाभवंतीत्यर्थः ५८ क्रियासुकर्मसुआयासपराःशीतादिसहनप्रयासपरायणाःव्र
तचर्यासुकृच्छ्रचांद्रायणांसंयुताःअज्ञानेनि अविवेकावृतचित्ताश्चतेमतारकावंचकाएवविचरंति नतुपरंधर्मंजानंतीतिपूर्वेणैवसंबंधः५९
नाममात्रेणस्वर्गादिसुखेनहोमाद्यैर्भ्रामिताःमूढाःपरोक्षंस्वर्गसुखं यद्वाबुद्धियात्वमतींद्रियम् मोक्षसुखंज्ञानंविनाइच्छंतीत्यर्थः६०अ
त्रहेतुर्ममामायेति ६१

एतदेवस्पष्टयति देहदंडनेनकायशोषणेनैवमुक्तिर्नास्ति अंतर्गताविवेकस्याविद्यमानत्वात् यथावल्मीकस्यसर्पालयस्यताडनादेवतन्म
ध्यगतभुजंगोनम्रियते तथादेहदंडनेनाविवेकोननश्यतीत्यर्थः ६२ अतोविवेकिनस्तेस्वयंनष्टाः परानपिनाशयंतीत्याह जटेति कीदृशाः
दांभिकानानावेषस्तथ्यलंधारयंति इतिज्ञानघनानपिजनान्भ्रामयंतीत्यर्थः ६३ अतस्तेषांसंगोनकर्त्तव्यइत्याह संसारजेति ब्रह्मज्ञोस्मीत्येव

देहदंडनमात्रेणकामुक्तिरविवेकिनाम् वल्मीकताडनादेवमृतःकुत्रमहोरगः ६२ जटाभारजिनैर्युक्ता दांभिकावेषधा
रिणः भ्रमंतिज्ञानिवल्लोकेभ्रामयंतिजनानपि ६३ संसारजसुखासक्तंब्रह्मज्ञोस्मीतिवादिनम् कर्मब्रह्मोभयभ्रष्टं
तंत्यजेदंत्यजंयथा ६४ गृहारण्यसमालोकेगतव्रीडादिगंबराः चरंतिगर्दभाद्याश्चविरक्तास्तेभवंतिकिम् ६५ मृ
द्भस्मोद्धूलनादेवमुक्ताःस्युर्यदिमानवाः मृद्भस्मवासीनित्यंश्वासकिंमुक्तोभविष्यति ६६

ब्रह्मनिष्ठावयं अतोस्माकं
विषयसुखासक्तेर्दोषोनास्ति शुभाशुभकर्मणांलेपाभावादितिवादिनाम् सर्वकर्मब्रह्मध्यानपराङ्मुखंचतंबोधवंचुमंत्यजवत्त्यजेत्
श्वपाकवन्नस्पृशेदपीत्यर्थः ६४ किंच येनिर्लज्जाःस्त्रीणांसमूहेपिनग्नाविचरंति तेगर्दभादिसमाएवनतुविरक्ताइत्याह गृहार-
ण्यसमाइति ६५ सदाभस्मवासिनोपिश्वगर्दभादयोयथामुक्तानभवंति तथासर्वांगमृद्भस्मधारणादपिमुक्तिर्नास्तीत्याह ६६

किंच अविवेककृतदुराग्रहेण गृहान्नपरित्यागादेवनतापसानभवंति किंतु तामसाएवेत्याह तृणेति तामसतापसागीतायामुक्ताः मूढ ग्राहेणात्मनोयत्पीडयाक्रियतेतपः परस्योत्सादनार्थंवातत्तामसमुदाहृतमिति ६७ किंच मलिनभावनयागंगादितीरेस्थिता अपियोगि नोनभवंतीत्याह आजन्मेति उक्तंच प्रातःप्रातःप्रपश्यंतिनर्मदांमत्स्यबंधकाः नतेशिवपुरंयांतिभावोहिभवकारणमितिभावः शुद्ध

तृणपर्णोदकाहाराःसततंवनवासिनः जंबुकाखुमृगाद्याश्चतापसास्तेभवंतिकिम् ६७ आजन्ममरणांतंच गंगादितटिनीस्थिताः मंडूकमत्स्यप्रमुखायोगिनस्तेभवंतिकिम् ६८ पारावताःशिलाहाराःकदाचिदपि चातकाः नपिबंतिमहीतोयंव्रतिनस्तेभवंतिकिम् ६९

मलिनभावनाहिशिवपुरस्यभवस्यजन्ममरणात्मकसंसारस्यकारणंभवतीत्ययमस्यार्थः ६८ येत्वातिक्रूराविवेकिनःअशास्त्र विहितोपवासादिभिर्जलान्नपरिहाराद्वृथैवात्मानंपीडयंति तेव्रतिनोनकिंत्वासुरनिश्चयाएवेत्याह पारावताइति तदुक्तंगीता- सुकर्षयंतःशरीरस्थंभूतग्राममचेतसः मांचैवांतःशरीरस्थंतान्विद्ध्यासुरनिश्चयानिति ६९ ७ ७ ८७

तस्मादितिहेतोः इत्यादिकं वर्णाश्रमादिधर्माचरणादिकं यत्कर्मतल्लोकानां मूढजनानां रंजनकारकं मोहकारणमेव नतुतत्त्वज्ञानं विनामोक्ष कारणमिति तदुक्तं ज्ञानप्रशंसायां मीनः स्नानपरः फणीपवनभुग्मेषश्चपर्णाशनोनीराशीखलुचातकः किमपरंशेतेगुहांमूषकः भस्मो द्धूलनतत्परः खलुखरोध्यानानुरक्तोबकः सर्वेषामिह कारणंशृणुसखेज्ञानंपरंकिंतपइति ७० एवंयथासदंभावर्णाश्रमधर्मादिक्रियामु केहेतुभूतानास्ति तथादंभरहिता पिशास्त्रजनाज्ञानंविनामोक्षप्रदानभवतीत्याह षडितिचतुर्दशाभिः खगहेगरुड षट्दर्शनमहाकूपेषट्-

तस्मादित्यादिकं कर्मलोकरंजनकारकम् मोक्षस्यकारणंसाक्षात्तत्त्वज्ञानं खगेश्वर ७० षट्दर्शनमहाकूपेप तिताः पशवः खग परमार्थं नजानंतिपशुपाशनियंत्रिताः ७१ वेदशास्त्रार्णवेघोरे उह्यमानाइतस्ततः षडू-र्मिनिग्रहग्रस्तास्तिष्ठंति हि कुतार्किकाः ७२

शास्त्ररूपांधकूपेपतितायेअनात्मज्ञाद्विपदपशवस्तेपरमार्थंब्रह्मरूपंनजानंति प तिपाद्यंतोऽपिस्वयंनानुभवंति अतः पशुरूपपाशेन अतिकठिनार्थविचारणारूपेणानियंत्रिताः बद्धाएवहितिष्ठंतीतिसंबंधः ७१ घोरेअनंतत्वाद् यंकरेइतस्ततः ग्रंथाद्ग्रंथांतराध्ययनेउह्यमानाव्याकुलाः शोकादिषडूर्मिणांनिग्रहेनिरोधेग्रस्ताव्यग्राः ईदृशाः कुतार्किकाः कुतर्कबलाद्द्वैतज्ञानपरा एवतिष्ठंति नतुतज्ज्ञानंतीत्यर्थः ७२

अतोवेदादिज्ञाता पियः परमार्थेनतत्वज्ञानंनवेत्ति तदाविडंबकस्य उपहासकस्यैवतस्य अतत्वज्ञस्यापितत्सर्वंज्ञातृत्वंवक्तृत्वंचकाकवद्भाषितंव्य
र्थमित्यर्थः ७३ किंच परतत्वविमुखानांशास्त्रपठनंज्ञानमपिव्यर्थमेवेत्याह इदमिति ज्ञानंनामज्ञेयप्राप्तिसाधनरूपम् अमानित्वमदंभित्वमि
त्यादिगीतोक्तं ज्ञेयंचैतज्ज्ञानगम्यम् अनादिमत्परंब्रह्मेत्यादितत्रैवोक्तं ब्रह्मस्वरूपंतदिदंज्ञानंज्ञेयंचास्तिनास्तिवेति संशयचिंतयापठंतीति
७४ किंच वाक्यादिभिरज्ञाहृद्याशोभिनाः अपिमूढास्तत्वपराङ्मुखादुःखिताएवतिष्ठंतीति अतएवव्याकुलेंद्रियास्ते श्रद्धावान्लभतेज्ञानं

वेदागमपुराणज्ञः परमार्थंनवेत्तियः विडंबकस्यतस्यैवतत्सर्वंकाकभाषितम् ७३ इदंज्ञानमिदंज्ञेयमितिचिंतासमाकुलाः
पठंत्यहर्निशंशास्त्रंपरतत्वपराङ्मुखाः ७४ वाक्यछंदोनिबंधेनकाव्यालंकारशोभिताः चिंतयादुःखितामूढास्तिष्ठंति
व्याकुलेंद्रियाः ७५ अन्यथापरमंतत्वंजनाःक्लिश्यंतिचान्यथा अन्यथाशास्त्रसद्भावोव्याख्यांकुर्वंतिचान्यथा ७६

तत्परःसंयतेंद्रियः ज्ञानंलब्ध्वापरांशांतिमचिरेणाधिगच्छतिइतिगीतोक्तंसंयतेंद्रियादिगुणैर्लभ्यज्ञानलाभाभावात् कदाचिदपिपरमसुखिनो
नभवंतीतिभावः ७५ किंच शास्त्रज्ञानात्कुतर्कबलेनविपरीतार्थप्रतिपादनात्तत्वज्ञानंनभवतीत्याह अन्यथेति तत्वंतुतत्वमसीति गुरूपदेशाग
म्यंजनास्तुशास्त्रपठनेनैवतज्ज्ञातुंक्लिश्यंति किंच शास्त्रस्यतत्त्वमस्यादिमहावाक्यरूपंवेदांतस्यसद्भावः भागत्यागलक्षणया अभेदप्रतिपादकस्त्व
च्छाशयः व्याख्यांचतस्यतत्वमसीतिकाकावेत्यन्यथैवकुर्वंति ७६

केचित्तु गुरूपदेशादि आदिशब्देन प्रणिपातादयस्तैर्वर्जितास्ते स्वानुभवं तिनैव उन्मनीभावं उपशममुद्रया ब्रह्मपरत्वं कथयंति तर्हि गुरूपदेशाद्धि
मर्थनगृह्णंतीत्यत आह अहंकाररता इति पंडितावयं किंनु वः पृच्छामः सेवयाम इत्यभिमानपराः अतस्ताहि प्रणिपातेन परिप्रश्नेन सेवया उपदे-
क्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः इति भगवदुक्तात्मज्ञानसाधनरहितास्तेनानुभवंतीत्यर्थः ७७ किंच गुरूपदेशं विना पठनपाठनात्तत्व ज्ञानं

कथयंत्युन्मनीभावं स्वयं नानुभवंति च अहंकाररताः केचिदुपदेशादिवर्जिताः ७७ पठंति वेदशास्त्राणि बोधयंति परस्पर
रम् नजानंति परं तत्वं दर्वीपाकरसं यथा ७८ शिरो वहति पुष्पाणि गंधं जानाति नासिका पठंति वेदशास्त्राणि दुर्लभो
भावबोधकः ७९ तत्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति गोपः कुक्षिगते छागे कूपे पश्यति दुर्मतिः ८० संसारमो
हनाशाय शाब्दबोधो नहि क्षमः ननिवर्त्तेत तिमिरं कदाचिद्दीपवार्त्तया ८१

नभवतीत्याह पठंतीति ७८ किंच भारवाहकवच्छास्त्राध्यायबोद्धा नास्ति अतस्तत्वं नजानातीत्याह शिर इति ७९ किंचात्मस्थतत्वज्ञा-
नं विना शास्त्रेषु ज्ञानमोहमात्र एवेत्याह तत्वमिति ८० किंच स्वानुभवं विना शाब्दबोधेनैवात्मतत्त्वनिरूपणादज्ञानं ननिवर्त्तेत किंतु न
ज्ञानप्रकाशेनेत्याह संसार इति ८१

अतोवैशारदबुद्धिमतामेवशास्त्रात्तत्त्वज्ञानंभवति तथाहीनस्यनेत्याह मज्ञेति ८२ ८३अणुभ्यश्चमहद्भ्यश्चशास्त्रेभ्यःकुशलोनरःसर्वतःसा
रमाद्द्यात्पुष्पेभ्यःइवषट्पदइति इतमत्तमवलंब्याह इदांमितिद्वाभ्याम् सारंतत्वज्ञानम् ८४ किंच शास्त्राण्यभ्यस्यपूर्वंदुःखगमात्मतत्त्वग्र १६
हणाय अधीत्यपश्चात् ज्ञानोत्तरंसंत्यजेत् भरनस्तुनाधीयेत तदुक्तंपंचमे छंदांस्यध्यापयिष्यन्संहव्याहृताभिः सप्रणवांशिरस्त्रिपदींग्र

मज्ञाहीनस्यपठनंयथांधस्यचदर्पणम् अतःप्रज्ञावतांशास्त्रंतत्त्वज्ञानस्यलक्षणम् ८२ इदंज्ञानमिदंज्ञेयंसर्वंतज्ज्ञा
तुमिच्छति दिव्यवर्षसहस्रायुःशास्त्रांतंनैवगच्छति ८३ अनेकानिचशास्त्राणिस्वल्पायुर्विघ्नकोटयः तस्मा-
त्सारंविजानीयात्क्षीरंहंसइवांभसि ८४ अभ्यस्यवेदशास्त्राणितत्त्वंज्ञात्वाथबुद्धिमान् पलालमिवधान्यार्थी
सर्वशास्त्राणिसंत्यजेत् ८५

ष्यवासंतिकान्मासानधीयानमप्यसमवेतरूपंग्राहयामासइति विष्णुपुराणेच नपपाठगुरुप्रोक्तंकृतोपनयनंश्रुतम् नददर्शचकर्मा
णिशास्त्राणिजगृहेनचइति नाधीयीतबहून्शब्दान्वाचोविग्लापनंहितदितिभगवद्वचनंचेति ८५ ८९

शास्त्रेणअहरहः संध्यामुपासीतइति विधिप्रतिपादकप्रवृत्तिरूपेणप्रयोजनम् इत्तवदावश्यकत्वंनास्ति अत्रौपनिषदीयमाख्यायिकाजनकः
कदाचित्संध्यासमयेस्वेच्छयापर्यटंतंदत्तमिदमपृच्छन् भोभगवन् भवान्ब्राह्मणोऽसि अतःसंध्यावंदनंकिमर्थंनकरोषीति तदासहोवाचत्वृदा
काशोनिदादित्योवर्त्ततेचनिरंतरम् नास्तमेतिनचोदेतिकथंसंध्यामुपास्महे मृतापितामहीमायाजातोविज्ञानबालकः सूतकेपातकेप्रासेक

यथामृतेनतृप्तस्यनाहारेणप्रयोजनम् तत्वज्ञस्यतथाताक्ष्यंनशास्त्रेणप्रयोजनम् ८६ नवेदाध्ययनान्मुक्ति
नशास्त्रपठनादपि ज्ञानादेवहिकैवल्यंनान्यथाविनतात्मज ८७ नाश्रमःकारणंमुक्तेर्दर्शनानिनकारणम्
तथैवसर्वकर्माणिज्ञानमेवहिकारणम् ८८

थंसंध्यामुपास्महेइति ८६ अप्रयोजनमेवाह अध्ययनादीनां-
ज्ञानंविनामोक्षे अनुपयोगात् ऋतेज्ञानान्नमुक्तिः तमेवविदित्वातिमृत्युमेतिनान्यः पंथाविद्यतेयनायेत्यादिश्रुतेःप्रमाणंदर्श
यति नेतिद्वाभ्याम् उक्तंचश्रीमदाचार्यचरणैरध्यात्मबोधे बोधोन्यसाधनेभ्योहिसाक्षान्मोक्षैकसाधनम् पाकस्यवह्निवज्ज्ञानंवि
न मोक्षोनासिद्ध्यतीति ८७ किंच ज्ञानशून्यसंन्यासाश्रमादयोपिमुक्तेःकारणंनेत्याह नाश्रमइति ८८ ७

एतज्ज्ञानंगुरूपादिष्टमेवमोक्षकारणंभवति नतुशास्त्राध्ययनजन्यंअतस्तद्विज्ञानार्थंसद्गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियंब्रह्मनिष्ठ
मितिश्रुतिमप्युक्तगुरूपदेशेनैवगृह्णीयादित्याह मुक्तिदेतिद्वाभ्याम् एकाअद्वैतात्मज्ञानोपदेशिकागुरुवागनुकरणकारिकैव नत्वनुभवदायि-
केत्यर्थः यथासंजीवनंनामकाष्ठंजीवनप्रदत्वादेकमपिश्रेष्ठम् ८९ शिवमद्वैतंतुरीयंमन्यंतेइतिश्रुत्यक्तंब्रह्मगुरुवक्त्रेणगुरूपदेशेनतुकि



मुक्तिदागुरुवागेकाविद्यासर्वाविडंबिका काष्ठभारसहस्रेषुह्येकंसंजीवनंपरम् ८९ अद्वैतंहिशिवंप्रोक्तंक्रिया
यासविवर्जितम् गुरुवक्त्रेणलभ्येतनाधीतागमकोटिभिः ९० आगमोक्तंविवेकोत्थंद्विधाज्ञानंप्रचक्षते
शब्दब्रह्मागममयंपरब्रह्मविवेकजम् ९१

यायासविवर्जितम् अध्ययनादिकर्मप्रयासरहितंय यास्यात्तथैवल
भ्येत प्राप्नोतिअन्यथा ऽनंतशास्त्राध्ययनेनापिनानुभवतीत्यर्थ ९० अत्रपरोक्षत्वापरोक्षत्वेनज्ञानस्यद्वैविध्यमाह आगमोक्तंशा
स्त्राध्ययनाज्जातमात्रंयथास्मदादीनांतत्परोक्षज्ञानंशब्दब्रह्मसंज्ञकंभवति किंच विवेकोत्थंवस्त्वविवेकात्स्वयमेवोत्पन्नंयथासिद्धगी ९०
ताश्रवणेनैवजातंजनकादीनांतदपरोक्षज्ञानंपरब्रह्मसंज्ञकंभवतीत्यर्थः ९१ ७ ७

केचित्शंकरानुयायिनः शैवाः स्वाभिमतेनाद्वैतमेवप्रतिपादयंति अपरेमध्वाद्यनुगावैष्णवाभिमानिनोद्वैतंचेति किंतुद्वैताद्वैतमतदुराग्रहवर्जिततत्वंस्वानु भवगम्यंशिवमद्वैतंसमंसर्वमतानुस्यूतंनजानंति तदुक्तंकुसुमदशनेन त्रयीसांख्यंयोगः पशुपतिमतंवैष्णवमितिप्रभिन्नेप्रस्थानेपरमिदमदः पथ्यमितिच रुचीनांवैचित्र्यादृजुकुटिलनानापथजुषांनृणामेकोगम्यस्त्वमसिपयसामर्णवइवेति ९२ अतोममममत्वेनबंधकत्वाद्दृयापां

अद्वैतंकेचिदिच्छंतिद्वैतमिच्छंतिचापरे समंतत्वंनजानंतिद्वैताद्वैतविवर्जितम् ९२ द्वेपदेबंधमोक्षायनममेतिममे तिच ममेतिबध्यतेजंतुर्नममेतिप्रमुच्यते ९३ तत्कर्मयन्नबंधायसाविद्यायाविमुक्तिदा आयासायापरंकर्मवि द्यान्याशिल्पनैपुणम् ९४ यावत्कर्माणिदीयंतेयावत्संसारवासना यावदिंद्रियचापल्यंतावत्तत्वकथाकुतः ९५

डत्यमेवेत्याह द्वेइति कलत्रादिममत्वेनवा ९३ किंच कर्मतुतदेवयद्बंधायनभवति विद्यापिसैवयामुक्तिप्रदाभवतीति अपरंबंधकंकर्मतु आयासायतुषावघातवत् खेदायैव अन्याध्यात्मविद्यातिरिक्ताशिल्पनैपुणंहर्म्यादिनिर्माणचातुर्यवद्भवतीति ९४ तत्त्वज्ञानेतरयाना द यावदितित्रिभिः दीयंतेफलोन्मुखानिभवंति ज्ञानाग्निनानदग्धानीत्यर्थः ९५

म.गु.टी. यावत्स्वयत्नवेगः स्वसोद्योगोस्ति कल्पना अघटघटनात्तत्वकथातत्वज्ञानस्यवार्त्तापिकुतः तत्वज्ञानंकदाचिदपिनभवतीत्यर्थः ९६ ९७ तत्त्वं अ०
९१ आत्मज्ञानंयावन्नविंदति तावद्व्रतपादानिकर्त्तव्यानि तत्वेज्ञातेनुतपादिसर्वंकर्मतस्मिन्नेवांतर्भवतीतिभावः तदुक्तंभगवता सर्वंकर्मा १६
खिलंपार्थज्ञानेपरिसमाप्यते इतिस्मृतिश्चसर्वंतदभिसमेति यत्किंचित्प्रजाः साधुकुर्वंतीति ज्ञानार्णवेप्युक्तंच स्नातंतेनसमस्ततीर्थनिचये

यावद्देहाभिमानश्चममतायावदेवहि यावत्स्वयत्नवेगोस्तियावत्संकल्पकल्पना ९६ यावन्नोमनसःस्थैर्यंनयावच्छास्त्रचिंतन
म् यावन्नगुरुकारुण्यंतावत्तत्वकथाकुतः ९७ तावत्तपोव्रतंतीर्थंजपहोमार्चनादिकम् वेदशास्त्रागमकथायावत्तत्त्वंनविंद
ति ९८ तस्मात्सर्वप्रयत्नेनसर्वावस्थासुसर्वदा तत्वनिष्ठोभवेद्धीमान्यदीच्छेन्मोक्षमात्मनः ९९ धर्मज्ञानप्रसूनस्यस्वर्ग
मोक्षफलस्यच तापत्रयादिसंतप्तः छायांमोक्षतरोःश्रयेत् १००
सर्वापिदत्तावानिर्यज्ञानांचकृतंसहस्रमयुतंदेवाश्चसंतर्पिताःसंसाराच्च
समुद्धृताःस्वपितरःसर्वस्यपूज्योप्यसौ यस्यब्रह्मविचारणेक्षणमपिप्राप्नोतिधैर्यंमन इति ९८ तस्मात्तत्वनिष्ठोभवेदितिसंबंधः ९९ उपासनाधर्मो
ज्ञानंचप्रसूनेयस्यबीजास्पदत्वात् स्वर्गादिभोगफलंयस्येति यत्रअनायासेनैवसकलसुखावाप्तिर्भवतीत्यर्थः अध्यात्मादितापत्रयोपसंतप्तः ९१
आध्यात्मिकंज्वरादि आधिदैविकंउष्णादिआधिभौतिकंदुर्जनादिच्छायांश्रयेत् मोक्षसुखंसदैववांच्छेदित्यर्थः १००

आत्मज्ञानादेवमुक्तिर्भवतीत्युपसंहरति तस्मादिति १०१ एवंतत्त्वज्ञान्मोक्षंप्रतिपाद्य अधुनातत्त्वज्ञस्यातुरकृत्यंनिरूपयति अंतकालइतिष
ड्भिः १०२ गतसाध्वसःमृत्युभयशून्यः असंगोनाम अनासक्तिस्तेनास्त्रेणस्पृहांसकलेच्छांममतेदेहं अनुयेपुत्रकलत्रादयस्तेषामपिस्पृहांछिंद्यात् दे

तस्माज्ज्ञानेनात्मतत्त्वंविज्ञेयंश्रीगुरोर्मुखात् सुखेनमुच्यतेजंतुर्घोरसंसारबंधनात् १०१ तत्त्वज्ञस्यांतिमंकृत्यंशृणुव
क्ष्यामितेधुना येनमोक्षमवाप्नोतिब्रह्मनिर्वाणसंज्ञकम् २ अंतकालेतुपुरुषआगतेगतसाध्वसः छिंद्यादसंगशा-
स्त्रेणस्पृहांदेहेनुयेचतम् ३ गृहात्प्रव्रजितोधीरःपुण्यतीर्थजलाप्लुतः शुचौविविक्तआसीनोविधिवत्कल्पितासने ४
अभ्यसेन्मनसाशुद्धंत्रिवृद्ब्रह्माक्षरंपरम् मनोयच्छेज्जितश्वासोब्रह्मबीजमविस्मरन् ५

हादिषुवीतरागोभवेदित्यर्थः ३ किंच गृहात्प्रव्रजितोनिर्गतः गृहेस्थितस्यपुनरप्यासक्तिसंभवात् तत्रकृत्यमाह शुचाविति विविक्तेए
कांतेविधिवत्कुशाजिनचैलैः क्रमेणाभिनिर्मिते ४ त्रिवृत् अकारउकारमकारात्मकम् ५

बुद्धिर्वैशारदी सा सारथिः साहायभूता यस्य सः शमार्थे भगवद्रूपे ६ एवं चक्षुरादिभिर्मनसा च बाह्यविषयग्रहणं स्मरणं च विहाय ब्रह्माह
मस्मीत्यनुभववाक्यार्थं विभावयेदित्याह अहमिति योहं स ब्रह्मैव यद्ब्रह्म तदहमेवेति समीक्ष्य न चाहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः
ब्रह्माहमिति भावनया ब्रह्मणः परोक्ष्यनिवृत्तिर्भवतीति व्यवहारो दर्शितः ततश्चानिष्कले निरुपाधौ आत्मनि ब्रह्मणि आत्मानं मन आधाय स्थिरो

निवृत्तो विषयेभ्योक्षानू मनसा बुद्धिसारथिः मनः कर्मभिराक्षिप्य शमार्थे धारयेद्धिया ६ अहं ब्रह्म परं धाम ब्रह्माहं परमं प
दम् एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ७ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् यः प्रयाति त्यजन्देहं स या
ति परमां गतिम् ८ न यत्र दांभिका यांति ज्ञानवैराग्यवर्जिताः सुधियस्तां गतिं यांति तानहं कथयामि ते ९

कृत्य ७ तत ओमित्येकं यदक्षरं तदेव ब्रह्म तदुच्चारयन्नेव देहं त्यजन् यः प्रकर्षेण याति अर्चिरादिमार्गेण सः परमां श्रेष्ठां स हातिमेव याति पुनर्दुःखालयम ९२
शाश्वतं जन्म न प्राप्नोतीति द्वयोरर्थः ८ किंच एवं अंतकाले धारणया मस्मीति नित्याभ्यासवतां ज्ञानिनामेव भवति नान्येषामित्याह न यत्रेति षड्भिः ९

निर्मानेतिनिर्गतोमानमोहौ अहंकारमिथ्याभिनिवेशौयेभ्यस्तेजितः पुत्रकलत्राद्यासक्तिरूपोदोषोयैः अध्यात्मेआत्मज्ञानेनित्याः परिनिष्ठिताः विशेषेणनिवृत्तः कामोभिलाषोयेभ्यस्तेसुखदुःखहेतुत्वात् सुखदुःखसंज्ञानिशीतोष्णादीनिद्वंद्वानितैर्मुक्ताः अतएव अमूढानिवृत्ता-

निर्मानमोहाजितसंगदोषा अध्यात्मनित्याविनिवृत्तकामाः द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपदमव्ययंतत् १० ज्ञानन्हदेसत्यजलेरागद्वेषमलापहे यःस्नातिमानसेतीर्थेसवैमोक्षमवाप्नुयात् ११

विद्याःविवेकिनस्तदव्ययंपदंगच्छंति तद्विष्णोः परमंपदंसदापश्यंतिसूरयः इतिश्रुत्युक्तम् किंच नतद्भासयतेसूर्योनशशांकोनपावकः यद्गत्वाननिवर्त्तंतेतद्धामपरमंममेति भगवदुक्तस्वरूपेलीनाभवंतीत्यर्थः १० ज्ञानमेवन्हदोनिरवातोयस्यसत्यंब्रह्मतदेवजलंयस्मिन् मानसेहृदयांतर्गतेतीर्थेनतुबाह्ये ११

किंच मद्भक्तिःस्तुस्वतंत्रापिमुक्तिहेतुःकिंपुनर्ज्ञानवैराग्ययुक्तेत्याह मौढमिति ब्रह्मादिस्थावरांतेषुवैराग्यविषयेष्वनुयथैवकाकविष्ठायांवैराग्यमौ 
ढमुच्यते एतदास्थायधृत्वाअनन्यभाक् वासुदेवःसर्वमितिबुद्ध्याअन्यमजानन्नित्यर्थः पूर्णदृष्टिःपूर्णव्यापकेब्रह्मणिदृष्टिर्यस्य अतएवप्रस- 
न्नात्माप्रसन्नोयस्येति १२ मरणोत्सुकःकृतकृत्याःप्रतीक्षंतेमृत्युंप्रियमिवातिथिमित्युक्तंकंठितोयस्तीर्थेनिवसन्नेवम्रियते १३अयोध्यादिस

प्रौढवैराग्यमास्थायभजतेमामनन्यभाक् पूर्णदृष्टिःप्रसन्नात्मासर्वमोक्षमवाप्नुयात् १२ त्यक्त्वागृहंचयस्तीर्थेनिव
सेन्मरणोत्सुकः म्रियतेमुक्तिक्षेत्रेषुसर्वमोक्षमवाप्नुयात् १३ अयोध्यामथुरामायाकाशीकांचीअवंतिका पु-
रीद्वारावतीज्ञेयासप्तैतामोक्षदायकाः इतितेकथितंतार्क्ष्यमोक्षधर्मसनातनम् ज्ञानवैराग्यसहितंश्रुत्वामोक्ष
मवाप्नुयात् १५ मोक्षंगच्छंतितत्वज्ञाधार्मिकाः स्वर्गतिंनराःपापिनोदुर्गतिंयांतिसंसरंतिखगादयः १६

प्तमुक्तिक्षेत्राण्येवाह १४ मोक्षोपायमुपसंहरति १५ सकलग्रंथप्रतिपादितार्थमाह मोक्षमिति अत्रैवंप्रक्रियातत्त्वज्ञानेनतुपुनरावृत्ति
रहिताविदेहमुक्तिर्भवतीति श्रद्धादिधर्मैस्स्वर्गभोगानंतरमावृत्तिः निषिद्धकर्मभिस्तुनरकभोगानंतरमावृत्तिःखगादयःपक्षिपशु 
कीटादयःक्षुद्रजीवास्तुसंसरंति अत्रैवपुनःपुनर्जन्ममरणेलभंतेइतिग्रंथार्थसंग्रहः१६ ५ ५ ५

पुनरपिमहदनुकंपयाश्रवणेच्छामाविष्करोति किमिति १७ सूतः शौनकंप्रतिगरुडस्यकृतार्थतामाह एवमितित्रिभिः ध्यानपरः

इत्येवंसर्वशास्त्राणांसारोद्धारोनिरूपितः मयातेषोडशाऽध्यायैःकिंभूयःश्रोतुमिच्छसि १७ सूतउवाच
एवंश्रुत्वावचोराजन्गरुडोभगवन्मुखात् कृतांजलिरुवाचेदंप्रणम्यमुहुर्मुहुः १८ भगवन्देवदेवेश
श्रावयित्वावचोमृतम् तारितोहंत्वयानाथभवसागरतः प्रभो १९ स्थितोस्मिगतसंदेहःकृतार्थोस्मिनसंशयः
इत्युक्त्वागरुडस्तूष्णींस्थित्वाध्यानपरोभवत् २०

अंतर्मुखवृत्त्यात्मास्वानुभवपरायणएवाभूत्नतुश्रवणेच्छाजातेत्यर्थः १८ १९ २० ७ ७

इदानींग्रंथारंभेचग्रंथांतेग्रंथकर्त्तास्तवेद्धरिम् इतिसत्संप्रदायानुरोधेनग्रंथार्थमुद्घाटयन्हरिंस्तौति यः स्वनामस्मरणादेवप्रथमा
दिषडाध्यायोक्तदुर्गतिंमन्वादिकोक्तप्रायश्चित्तांविनैवहरतीतिहर्त्ता स्वपूजनमेवयज्ञस्तेनैवद्रव्ययज्ञातुरदानादिकंविनैवससमादिनवा



स्मरणाद्दुर्गतिहर्त्तापूजनयज्ञेनसद्गतेर्दाता यःपरयानिजभक्त्यादधातिमुक्तिंसमांहरिःपातु २१ इतिश्रीगरु
डपुराणेसारोद्धारेभगवद्गरुडसंवादेमोक्षधर्मनिरूपणोनामषोडशोऽध्यायः १६

ध्यायोक्तसद्गतेर्दाताभवतीति किंच परयानिर्गुणसर्वधर्मोत्तमयानिजभक्त्यैवएतदध्यायोक्ततत्त्वज्ञानंविनैवमुक्तिंददाति सहरिर्मांपातुज
न्ममरणाद्रक्षतु १२१ इयंनौनिधिरामेणमयाटीकाकृतादरात् अनयारमयासार्धंप्रीयतांमधुसूदनः १ इतिश्रीगरुडपुराणेटीकायांषोडशोऽ
ध्यायः १६

श्रीगणेशायनमः श्रीभगवानुवाच इत्याख्यानंमयाताक्ष्यसर्वंप्रेतौर्ध्वदैहिकं दशाहाभ्यंतरेश्रुत्वासर्वपापैःप्रमुच्यते १
इदंचामुष्मिकंकर्मपितृमुक्तिप्रदायकम् पुत्रवांछितदंचैवपरत्रेहसुखप्रदम् २ इदंकर्मनकुर्वंतियेनास्तिकनराधमाः तेषांज
लमपेयंस्यात्सुरातुल्यंनसंशयः ३ देवताःपितरश्चैवनैवपश्यंतितद्गृहम् भवंतितेषांकोपेनपुत्राःपौत्राश्चदुर्गताः ४ ब्राह्मणाःक्ष
त्रियावैश्याःशूद्राश्चैवेतरेपिच तेचांडालसमाज्ञेयाःसर्वप्रेतक्रियांविना ५ प्रेतकल्पमिदंपुण्यंशृणोतिश्रावयेच्चयः उभौतौपापनि
र्मुक्तौदुर्गतिंनैवगच्छतः ६ मातापित्रोश्चमरणेसौपर्णंशृणुतेतुयः पितरौमुक्तिमापन्नौसुतःसंततिमान्भवेत् ७ नश्रुतंगारु
डंयेनगयाश्राद्धंचनोकृतम् वृषोत्सर्गःकृतोनैवनचमासिकवार्षिके ८ सकथंकथ्यतेपुत्रःकथंमुच्येदृणत्रयात् मातरंपितरंचै
वकथंतारयितुंक्षमः ९ तस्मात्सर्वप्रयत्नेनश्रोतव्यंगारुडंकिल धर्मार्थकाममोक्षाणांदायकंदुःखनाशनम् १० पुराणंगारुडं
पुण्यंपवित्रंपापनाशनम् शृण्वतांकामनापूरंश्रोतव्यंसर्वदैवहि ११ ब्राह्मणोलभतेविद्यांक्षत्रियःपृथिवींलभेत् वै
श्योधनिकतामेतिशूद्रःशुध्यतिपातकात् १२ श्रुत्वादानानिदेयानिवाचकायाखिलानिच पूर्वोक्तशयनादीनिनान्यथासफ
लंभवेत् १३ पुराणंपूजयेत्पूर्वंवाचकंतदनंतरम् वस्त्रालंकारगोदानैर्दक्षिणाभिश्चसादरम् १४ अन्नैश्चहेमदानैश्चभूमिदा
नैश्चभूरिभिः पूजयेद्वाचकंभक्त्याबहुपुण्यफलाप्तये १५ वाचकस्यार्चनेनैवपूजितोऽहंनसंशयः संतुष्टेतुष्टिताःयामिवाचके

नात्रसंशयः १६ इतिश्रीगरुडपुराणश्रवणफलम् आसीद्दक्षापुराणस्यश्रीशार्दूलमहीपतेः स्कंस्कणनगरस्याधिपस्थः
श्रीसुखलालजी १ तस्यश्रीहरिनारायणात्मजस्तत्सुतेनतु मयानौनिधिरामेण कृतोयंसारसंग्रहः २ प्राचीनैर्यत्कृतःपूर्वंगारु
डः सारसंग्रहः सतुनोबुद्धिदौर्बल्याज्ज्ञातस्तस्मादयंकृतः ३ पुनरुक्तिंपरित्यज्यक्रमेणायंमयाकृतः बालानांसुखबोधायनतु-
पांडित्यगर्वितः ४ अत्राप्रमाणंयत्किंचित्प्रमादाल्लिखितंमया विद्वद्भिःसुविचार्यैवशोधनीयोनसूयुभिः ५ सारोद्धारोमयामूले
बहुग्रंथैर्यथाकृतः तथैवानेकटीकाभिरुद्धृतःसारसंग्रहः ६ महार्घवेदान्मयात्रयथास्थानंनियोजितः प्राज्ञंविनाप्रयासंमेको-
ज्ञास्यतिविमूढधीः ७ विद्वानेवहिजानातिविद्वज्जनपरिश्रमम् नहिवंध्याविजानातिगुर्वींप्रसववेदनाम् ८ येपूर्वसंग्रहेमूढानैवजा
नंतियोग्यताम् नेकथंहिप्रविष्यंतिहर्षिताःपठनेस्यत्र ९ सारोद्धारमिमंमिश्राःपठंतुनपठंतुवा मयातुस्वीयबोधायकृतमेतन्नसं
शयः १० मंगलंभगवान्विष्णुर्मंगलंगरुडध्वजः मंगलंपुंडरीकाक्षोमंगलायतनोहरिः ११ लाभस्तेषांजयस्तेषांकुतस्तेषांप
राजयः येषामिंदीवरश्यामोहृदयस्थोजनार्दनः १२ राजानःपरिपालयंतुवसुधांधर्मेस्थिताःसर्वदापृथ्वीकामदुघाभव
त्वविरलंवर्षंतुकालेघनः ईर्ष्यासुज्झतुदुर्जनःपरगुणेष्वासज्जतांसज्जनः सत्काव्यामृतवर्षिणीकविमुखेवाणीचिरंनंद
तु १३ इतिश्रीगरुडपुराणस्वकृतश्लोकाः प्रथमाध्यायेऐहिकामुष्मिकदुःखनिरूपणश्लोकाश्च ६० द्वितीये

यममार्गनिरूपणम् ८६ तृतीयेयमयातनानिरूपणम् ७१ चतुर्थेनरकप्रदपापनिरूपणम् १०४ पंचमेपापचिन्हनिरूपणाम् ५८ षष्ठेपापिनांजन्मादिदुःखनिरूपणम् ४३ एवंषडध्यायैः पापगतिः सप्तमेबभ्रुवाहनप्रेतसंवादः ६८ अष्टमेआतुरदानम् ११८ नवमेम्रियमाणकृत्यम् ४८ दशमेदाहास्थिसंचयकर्मनिरूपणम् १०४ एकादशेदशगात्रविधिः ४२ द्वादशेएकादशाहविधिः ८० त्रयोदशेसपिंडीशय्यापददाननिरूपणम् १२३ चतुर्दशेधर्मराजनगरनिरूपणम् ८६ पंचदशेसुकृतिजनजन्माचरणनिरूपणम् ९५ षोडशेध्यायेनमोक्षधर्मनिरूपणमिति १२१ मूलसंख्या १२८७ सटीकसं-३१०० फल ३२ इतिगरुडपुराणंसमाप्तम् श्रीगरुडध्वजोविष्णुर्विजयते शुभंभूयात् ७

हें पुस्तक मुंबईंत बापु सदाशिव शेट हेगिष्टे शेट्ये श्रीवर्द्धनकर यांणीं आपल्याछापखान्यांत छापिलें. शके १७८८ क्षयनामसंवत्सरे मिति वैशाख वद्य तृतीयायांसौम्यवासरे समाप्तिमियात् ७ ७ ७

॥ इतिसटीकगरुडपुराणंसमाप्तं ॥